ओं ऐं ह्रीं श्रीं रहस्ययोगिनीमयूखायै सप्तमावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः।

(इति योनिमुद्रया प्रणमेत् ।।)

*Show Yoni Mudra and bow to Lalita.*

## ।। आयुधार्चनम् ।।

*Outside the inner most triangle in the places indicated perform pujana and tarpana to the weapons namely, Five arrows, Bow, Noose and Goad of Mother Lalita and Kameshwara in the places indicated.*




(मध्यत्र्यश्रस्य बहिः पश्चिमादिदिक्षु प्रादक्षिण्येन–)

ओं ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां सर्वजम्भनेभ्यः कामेश्वरीकामेश्वरबाणेभ्यो नमः।
बाणशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः। *(Twice)*

ओं ऐं ह्रीं श्रीं धं थं सर्वसंमोहनाभ्यां कामेश्वरीकामेश्वरधनुर्भ्यां नमः।
धनुः शक्ति श्रीपादुकां पूजयामि तर्पयामि नमः। *(Twice)*

ओं ऐं ह्रीं श्रीं आं ह्रीं सर्ववशीकरणाभ्यां कामेश्वरी कामेश्वर पाशाभ्यां नमः। पाशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः।
*(Twice)*

ओं ऐं ह्रीं श्रीं क्रों क्रों सर्वस्तम्भनाभ्यां कामेश्वरी कामेश्वराङ्कुशाभ्यां नमः।
अङ्कुशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः। *(Twice)*

(इत्यायुधार्चनं विदध्यात् । ततः–)

## ॥ अष्टमावरणम् ॥

*(Sarvasiddhiprada Chakra) Use red colour flowers preferably for pujana and tarpana.*

ओं ऐं ह्रीं श्रीं ह्स्त्रैं ह्स्क्ल्रीं ह्स्रौः सर्वसिद्धिप्रदचक्राय नमः।
(पुष्पाञ्जलिः) *Offer flowers.*

नादप्रकृतिकगुणत्रयप्रधानत्रिशक्तिरूपरेखात्रयात्मके बन्धूकपुष्प-बन्धुकिरणे त्रिकोणे अग्रदक्षवामकोणेषु बिन्दौ च क्रमेण-

*Worship the Three Devatas namely Mahakameshwari, Mahavajreshwari and Mahabhagamalini in the fourteen edged triangles.*

ओं ऐं ह्रीं श्रीं ऐं कएईलह्रीं अग्निचक्रे कामगिरिपीठे मित्रेशनाथ नवयोनिचक्रात्मक-आत्मतत्त्व-सृष्टिकृत्य-जाग्रद्दशाधिष्ठायक-इच्छाशक्ति-वाग्भवात्मक वागीश्वरीस्वरूप ब्रह्मात्मशक्ति-महाकामेश्वरी-श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं क्लीं हसकहलह्रीं सूर्यचक्रेपूर्णगिरिपीठे षष्ठीशनाथ-दशारद्वयचतुर्दशारचक्रात्मक विद्यातत्त्व-स्थितिकृत्य-स्वप्नदशाधिष्ठायक-ज्ञानशक्ति कामराजात्मक कामकलास्वरूप विष्णवात्मशक्ति महावज्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं सौः सकलह्रीं सोमचक्रे जालन्धरपीठे उड्डीशनाथ अष्टदलषोडशदलचतुरश्रचक्रात्मक-शिवतत्त्व-संहारकृत्य सुषुप्ति-दशाधिष्ठायक क्रियाशक्ति-शक्तिबीजात्मक-परापर शक्तिस्वरूप रुद्रात्मशक्ति महाभगमालिनी श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं ऐं कएईलह्रीं क्लीं हसकहलह्रीं
सौः सकलह्रीं परब्रह्मचक्रे महोड्याणपीठे चर्यानन्दनाथ-
समस्तचक्रात्मक-सपरिवारपरमतत्त्व-सृष्ठिस्थितिसंहारकृत्य-
तुरीयदशाधिष्ठायक इच्छाज्ञानक्रियाशान्ताशक्ति-
वाग्भवकामराजशक्तिबीजात्मक-परमशक्तिस्वरूप-
परब्रह्मात्मशक्ति-श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि
तर्पयामि नमः।*( 3 Times)*

ओं ऐं ह्रीं श्रीं एताः अतिरहस्ययोगिन्यः सर्वसिद्धिप्रदे चक्रे
समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः
सर्वोपचारैः संपूजिताः संतर्पिताः सन्त्रुष्टाः सन्तु नमः।
(पुष्पाञ्जलिः) *Offer flowers.*

(महाकामेश्वर्याः पुरतः-)

*Visualize the Chakreshvari, Siddhi and Mudra Devatas and perform pujana and tarpana.*

ओं ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्ल्रीं ह्सौः त्रिपुराम्बाचक्रेश्वरी
श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं इं इच्छासिद्धि श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं ह्सौः सर्वबीजमुद्राशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं ह्सौः- (इति सर्वबीजमुद्रां प्रदर्श्य-
*Show the Sarvabija Mudra*



मूलेन देवीं त्रिः संतर्प्य-
*Perform pujana and tarpana to Lalita thrice.*

धूपं दीपं नैवेद्यं ताम्बूलं नीराजनं च समर्प्य-)
*Offer Incense, Lamp, Naivedya, Tamboola and Karpoora Aarti.*

ओं ऐं ह्रीं श्रीं अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम् ।।(इति पूजां समर्प्य-)

*Take a little water from the conch and offer the eighth Avarana worship in the left hand of Lalita (mentally).*

ओं ऐं ह्रीं श्रीं अतिरहस्ययोगिनीमयूखायै अष्टमावरण
देवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः।
(इति योनिमुद्रया प्रणमेत् ।।)

*Show Yoni Mudra and bow to Lalita.*

## नवमावरणम्

***Ninth Avarana (Sarvanandamaya Chakra)*** *Use red colour flowers preferably for pujana and tarpana.*

ओं ऐं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं
सर्वानन्दमयचक्राय नमः। (पुष्पाञ्जलिः) *Offer flowers.*

ओं ऐं ह्रीं श्रीं मूलं श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिका
श्रीपादूकां पूजयामि तर्पयामि नमःत्रिः संतर्प्य ।

*Worship Mother Lalita in the dot (Bindu) three times.*

एषा परापरातिरहस्ययोगिनी सर्वानन्दमये चक्रे समुद्रा ससिद्धिः
सायुधा सशक्तिः सवाहना सपरिवारा सर्वोपचारैः संपूजिता
संतर्पिता संतुष्टास्तु नमः। (पुष्पाञ्जलिः)
(महात्रिपुरसुन्दर्याः पुरतः-)

*Visualize the Chakreshwari, Siddhi and Mudra Devatas and perform pujana and tarpana*

ओं ऐं ह्रीं श्रीं पञ्चदशी श्रीमहात्रिपुरसुन्दरी चक्रेश्वरी
श्रीपादूकां पूजयामि तर्पयामि नमः

ओं ऐं ह्रीं श्रीं पं प्राप्तिसिद्धि श्रीपादूकां पूजयामि तर्पयामि नमः
ओं ऐं ह्रीं श्रीं ऐं सर्वयोनिमुद्राशक्ति श्रीपादूकां पूजयामि तर्पयामि नमः
ओं ऐं ह्रीं श्रीं ऐं–इति सर्वयोनिमुद्रां प्रदर्श्य



*Show the Sarvayoni Mudra*

---

*षोडश्युपासकानामेव-

*For those who have been initiated into Shodhashi Mantra the following mantra should be used to perform pujana and tarpana thrice.*

ओं ऐं ह्रीं श्रीं हसकल हसकहल सकलह्रीं तुरीयाम्बा श्रीपादूकां पूजयामि तर्पयामि नमः। इति त्रिः संतर्प्य–

## षोडश मूलविद्या

*One may optionally perform tarpana using other shodhashi mantras. The sixteen Mulavidyas are given here as reference.*

१.३– स्वच्छ प्रकाश परिपूर्ण परापरा सिद्ध विद्या कुल योगिनी ह्रीं – कुल योगिनी मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

२.३– ह्सौं स्वात्मानं बोधय बोधय स्हौः: प्रासाद परा मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

३.३– ऐं क्लीं ब्लूं क्लिन्ने क्लेदिनि महा मदद्रवे क्लीं क्लेदाय क्लेदाय क्लां क्लीं मोदय मोदय श्रीं ह्रीं क्लीं नमः स्वाहा – अति रहस्य योगिनी मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

४.३– हंसः स्वच्छानन्द परमहंस परमात्मने स्वाहा सहक्षौं – शाम्भवी मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

५.३– ह्रीं नित्य स्फुरणानन्दमये महाबिन्दु व्यापक मातृकास्वरूपिणी ऐं ह्रीं श्रीं ईं –चिल्लेखा मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

६.३- ऐं ह्रीं श्रीं स्वच्छ प्रकाशात्मिके ह्रीं कुल महामलिनि ऐं कुल गर्भ मातृके ह्रीं समयविमले श्रीं – समय मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

७.३- हंसः नित्य प्रकाशात्मिके कुल कुण्डलिनि आज्ञासिद्धि महा भैरवी आत्मानं बोधय बोधय अम्बे भगवति ह्रीं हुं – परापर बोधिनी मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

८.३- ॐ मोक्षं कुरु – कुल पञ्चाक्षरि मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

९.३- कएईलह्रीं हसकहलह्रीं सकलह्रीं सौः–अनुत्तरपञ्चदशाक्षरि मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

१०.३- ऐं शुद्ध सूक्ष्म निराकर निर्विकल्पा परब्रह्म स्वरूपिणी क्लीं परानन्द शक्तिः सौः शाम्भवानन्द श्री – अनुत्तरा कौल मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

११.३- हंसः सोऽहं स्वच्छानन्द परमहंस परमात्मने स्वाहा – गुरूत्तम विमर्शिनि मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

१२.४- ह्रीं श्रीं अनामाख्य–व्योमातीत–नाथ परापरा–व्योमातीत–व्योमेश्वर्यंबा–अनामाख्य मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

१३.३- ऐं ईं ऊं – संकेत सार मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

१४.३- ह्रीं भगवति विच्चे वाग्वादिनी क्लीं महाहृदय महामतङ्गिनि क्लिन्ने ब्लूं ह्रीं –अनुत्तर वाग्वादिनी मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

१५.३- हस्रैं हसक्ल्रीं हस्रौः–अनुत्तर शांकरी मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

१६.३- कएईल-हसकहल-सकलह्रीं सर्वानन्दमय बैन्दव चक्रे
महोड्याणपीठे परब्रह्मस्वरूपिणि परामृतशक्तिः सर्वमन्त्रेश्वरि
सर्वविद्येश्वरि सर्वपीठेश्वरि सर्ववीरेश्वरि सर्वयोगीश्वरि
सर्ववागीश्वरि सर्वसिद्धेश्वरि सकल-जगदुत्पत्ति-मातृका
स-चक्रा स-देवता स-मुद्रा स-सिद्धिः सायुधा सासना
सवाहना सपरिवारा स-शक्तिः सालङ्कारा स चक्रेश्वरिका
श्रीमहात्रिपुरसुन्दरि परया-अपरया-परापरया-सपर्यया
सर्वोपचारैः सम्पूजिता सन्तर्पिता सन्तुष्टाऽस्तु नमः-
श्रीपूर्ति मूलविद्याम्बा श्रीपादुकां पूजयामि तर्पयामि नमः

ओं ऐं ह्रीं श्रीं सर्वानन्दमये चक्रे महोड्याणपीठे चर्यानन्दनाथात्मक-तुरीयातीत-दशाधिष्ठायक-शान्त्यतीतकलात्मक-प्रकाशविमर्श-सामरस्यात्मक परब्रह्मस्वरूपिणी परामृतशक्तिः सर्वमन्त्रेश्वरी सर्वपीठेश्वरी सर्वयोगेश्वरी सर्ववागीश्वरी सर्वसिद्धेश्वरी सर्ववीरेश्वरी सकलजगदुत्पत्तिमातृका सचक्रा सदेवता सासना सायुधा सशक्तिः सवाहना सपरिवारा सचक्रेशिका परया अपरया परापरया सपर्यया सर्वोपचारैः संपूजिता संतर्पिता संतुष्टाऽस्तु नमः
(इति समष्ट्यञ्जलिं विधाय।) (पुष्पाञ्जलिः)

*Offer flowers*

ओं ऐं ह्रीं श्रीं सं सर्वकामसिद्धि
श्रीपादूकां पूजयामि तर्पयामि नमः
ओं ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वत्रिखण्डामुद्राशक्ति
श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वत्रिखण्डामुद्रां प्रदर्श्य।
*Show Sarvatrikhanda Mudra and bow to Lalita.*



**ओं ऐं ह्रीं श्रीं मूलेन देवीं त्रि : संतर्प्य**

*Perform pujana and tarpana to Lalita thrice.*

**धूपं दीपं नैवेद्यं ताम्बूलं नीराजनं च समर्प्य-**

*Offer Incense, Lamp, Naivedya, Tamboola and Karpoora Aarti.*

**ओं ऐं ह्रीं श्रीं अभीष्टसिद्धिं मे देहि शरणागतवत्सले।**
**भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ।(इति पूजां समर्प्य-)**

*Take a little water from the conch and offer the ninth Avarana worship in the left hand of Lalita (mentally).*

**ओं ऐं ह्रीं श्रीं परापरातिरहस्ययोगिनीमयूखायै नवमावरण देवता श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः। (इति योनिमुद्रया प्रणमेत् ।)**

*Show Yoni Mudra and bow to Lalita.*

## पञ्चपञ्चिकापूजा

**(बिन्दुचक्रोपरि सिंहासनाकारेण पीठभावनां कृत्वा मध्ये वाय्वीशानाग्निनिर्ऋतिकोणेषु च क्रमेण यजेत् ।।)**

*Visualize five steps above the Bindu and perform pujana and tarpana to the five Hordes of Deities namely five Lakshmis, five Koshambas, five Kalpalatambas, five Kamadughambas and five Ratnambas in the places indicated.*

*See Page. 142 for details.*



## १.पञ्च लक्ष्म्यः

ओं ऐं ह्लीं श्रीं मूलं । श्रीमहालक्ष्मीश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी।
श्रीविद्यालक्ष्म्यम्बा श्रीपादूकां पूजयामि तर्पयामि नमः (मध्ये)

ओं ऐं ह्लीं श्रीं श्रीं। श्रीमहालक्ष्मीश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी।
लक्ष्मीलक्ष्म्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः (वायव्ये)

ओं ऐं ह्लीं श्रीं ओं श्रीं ह्लीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्लीं श्रीं ओं महालक्ष्म्यै नमः।
श्रीमहालक्ष्मीश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। महालक्ष्मीलक्ष्म्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः (ईशाने)

ओं ऐं ह्लीं श्रीं श्रीं ह्लीं क्लीं श्रीमहालक्ष्मीशवरीबृन्दमण्डितासन संस्थिता सर्वसौभाग्यजननी श्री महात्रिपुरसुन्दरी
त्रिशक्तिलक्ष्म्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः(आग्नेये)

ओं ऐं ह्लीं श्रीं श्रीं सहकलह्लीं श्रीं। महालक्ष्मीश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी।
सर्वसाम्राज्यलक्ष्म्यम्बा श्रीपादूकां पूजयामि तर्पयामि नमः (नैर्ऋते)

## २. पञ्च कोशाम्बाः

ओं ऐं ह्लीं श्रीं मूलं । महाकोशेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। श्रीविद्याकोशाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

ओं ऐं ह्रीं श्रीं ओं ह्रीं हंसस्सोहं स्वाहा ।
महाकोशेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी
श्रीमहात्रिपुरसुन्दरी । परंज्योतिः कोशाम्बाश्रीपादुकां पूजयामि
तर्पयामि नमः। (वायव्ये)

ओं ऐं ह्रीं श्रीं ओं महाकोशेश्वरीबृन्दमण्डितासनसंस्थिता
सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी।
परानिष्कलाकोशाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः।।
(ईशाने)

ओं ऐं ह्रीं श्रीं हंसः महाकोशेश्वरीबृन्दमण्डितासनसंस्थिता
सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी।
अजपाकोशाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ओं ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः
कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं
पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं ।।
महाकोशेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी
श्रीमहात्रिपुरसुन्दरी। मातृकाकोशाम्बा श्रीपादुकां पूजयामि
तर्पयामि नमः। (नैर्ऋते)

## ३. पञ्चकल्पलताः

ओं ऐं ह्रीं श्रीं मूलं । महाकल्पलतेश्वरीबृन्दमण्डितासनसंस्थिता
सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। श्रीविद्याकल्पलताम्बा
श्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

ओं ऐं ह्रीं श्रीं ह्रीं क्लीं ऐं ब्लूं स्त्रीं ।
महाकल्पलतेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी।(पञ्चकामेश्वरी) त्वरिताकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

(वायव्ये)

ओं ऐं ह्रीं श्रीं ओं ह्रीं ह्रां हसकलह्रीं ओं सरस्वत्यै नमः ह्स्रैं ।
महाकल्पलतेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। पारिजातेश्वरीकल्पलताम्बा श्रीपादुकां पूजयामि तर्पयामि नमः । (ईशाने)

ओं ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं ऐं क्लीं सौः
महाकल्पलतेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। (कुमारी) त्रिपुटाकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ओं ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः। महाकल्पलतेश्वरी – बृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। पञ्चबाणेश्वरीकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

(नैर्ऋते)

## ४. पञ्चकामदुघाः

ओं ऐं ह्रीं श्रीं मूलं, महाकामदुघेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। श्रीविद्याकामदुघाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

ओं ऐं ह्रीं श्रीं ओं ह्रीं हंसः जुं संजीवनि जीवं प्राणग्रन्थिस्थं कुरु कुरु स्वाहा। महाकामदुघेश्वरीबृन्दमण्डितासनसंस्थिता

सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। अमृतपीठेश्वरी कामदुघाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (वायव्ये)

ओं ऐं ह्रीं श्रीं ऐं वद वद वाग्वादिनि ह्स्रैं क्लीं क्लिन्ने क्लेदिनि महाक्षोभं कुरु कुरु ह्स्क्ल्रीं सौः मोक्षं कुरु कुरु ह्स्रौः। महाकामदुघेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। सुधासूकामदुघाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (ईशाने)

ओं ऐं ह्रीं श्रीं ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा। महाकामदुघेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। अमृतेश्वरी कामदुघाम्बा महात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ओं ऐं ह्रीं श्रीं ओं ह्रीं श्रीं क्लीं ओं नमो भगवति माहेश्वरि अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा। महाकामदुघेश्वरी बृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। अन्नपूर्णाकामदुघाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (नैर्ऋते)

## ५. पञ्चरत्नाम्बा

ओं ऐं ह्रीं श्रीं मूलं । महारत्नेश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। श्रीविद्यारत्नाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

Ratnamba






Kamadughamba







Kalpalatamba







Koshamba







Lakshmyamba







ओं ऐं ह्रीं श्रीं ज्झ्रीं महाचण्डे तेजःसंकर्षिणि कालमन्थाने हः।
महारत्नेश्वरी बृन्दमण्डितासनसंस्थिता
सर्वसौभाग्यजननीश्रीमहात्रिपुरसुन्दरी। सिद्धलक्ष्मीरत्नाम्बा
श्रीपादुकां पूजयामि तर्पयामि नमः। (वायव्ये)

ओं ऐं ह्रीं श्रीं ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति
राजमातङ्गीश्वरि सर्वजनमनोहरि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं
सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि
सर्वसत्ववशंकरि सर्वलोकवशंकरि त्रैलोक्यं मे वशमानय स्वाहा
सौः क्लीं ऐं श्रीं ह्रीं ऐं । महारत्नेश्वरीबृन्दमण्डितासनसंस्थिता
सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। राजमातङ्गीश्वरी रत्नाम्बा
श्रीपादुकां पूजयामि तर्पयामि नमः। (ईशाने)

ओं ऐं ह्रीं श्रीं श्रीं ह्रीं श्रीं । महारत्नेश्वरीबृन्दमण्डितासनसंस्थिता
सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। भुवनेश्वरीरत्नाम्बा-
श्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ओं ऐं ह्रीं श्रीं ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि
वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः रुन्धे रुन्धिनि
नमः जम्भे जम्भिनि नमः मोहे मोहिनि नमः स्तम्भे स्तम्भिनि
नमः सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्त
चक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौ ऐं ठः ठः
ठः ठः हुं फट् स्वाहा। महारत्नेश्वरीबृन्दमण्डितासनसंस्थिता
सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। वाराहीरत्नाम्बा
श्रीपादुकां पूजयामि तर्पयामि नमः। (नैर्ऋते)

# षड्दर्शनविद्या

*Perform pujana and tarpana to the Six Deities governing the six Philosophies.*

ओं ऐं ह्लीं श्रीं तारे तुत्तारे तुरे स्वाहा। तारादेवताधिष्ठित
बौद्धदर्शन श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्लीं श्रीं गायत्री परोरजसि सावदों। ब्रह्मदेवताधिष्ठित
वैदिकदर्शन श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्लीं श्रीं ओं ह्लीं नमश्शिवाय। रुद्रदेवताधिष्ठितशैवदर्शन
श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्लीं श्रीं ओं ह्लीं घृणिस्सूर्य आदित्यों । सूर्यदेवताधिष्ठित
सौरदर्शन श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्लीं श्रीं श्रीं ओं नमो नारायणाय । विष्णुदेवताधिष्ठित
वैष्णवदर्शन श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्लीं श्रीं ओं श्रीं ह्लीं श्रीं भुवनेश्वरीदेवताधिष्ठित
शाक्तदर्शन श्रीपादुकां पूजयामि तर्पयामि नमः।

# षडाधारपूजा

*Perform pujana and tarpana to the six Deities governing Six Chakras in one's body.*

ओं ऐं ह्लीं श्रीं सां हंसः मूलाधाराधिष्ठानदेवतायै
साकिनीसहितगणनाथ स्वरूपिण्यै नमः।
गणनाथस्वरूपिण्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्लीं श्रीं कां सोहं स्वाधिष्ठानाधिष्ठानदेवतायै
काकिनीसहितब्रह्मस्वरूपिण्यै नमः। ब्रह्मस्वरूपिण्यम्बा
श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं लां हंसस्सोहं मणिपूरकाधिष्ठानदेवतायै
लाकिनीसहित विष्णुरूपिण्यै नमः। विष्णुस्वरूपिण्यम्बा
श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं रां हंसशिवस्सोहं अनाहताधिष्ठानदेवतायै
राकिणीसहितसदाशिवस्वरूपिण्यै नमः।
सदाशिवस्वरूपिण्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं डां सोहं हंसशिवः विशुद्ध्यधिष्ठानदेवतायै
डाकिनीसहितजीवेश्वरस्वरूपिण्यै नमः।
जीवेश्वरस्वरूपिण्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं हां हंसशिवस्सोहं सोहं हंसशिवः
आज्ञाधिष्ठानदेवतायै हाकिनीसहितपरमात्मस्वरूपिण्यै नमः।
परमात्मस्वरूपिण्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः।

## आम्नायसमष्टिपूजा।

*Perform pujana and tarpana to the Amnaya Devatas. (Here, a condensed format as per Chidanandanatha is given. One may use the elaborate procedure too wherein every deity forming part of the six amnayas are individually worshipped with their respective mantras.)*

ओं ऐं ह्रीं श्रीं हस्रैं हस्क्लीं हस्रौः पूर्वाम्नायसमय
विद्येश्वर्युन्मोदिनी देव्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं मूलं गुरुत्रयगणपतिपीठत्रयसहितायै
शुद्धविद्यादिसमय विद्येश्वरीपर्यन्तचतुर्विंशति
सहस्रदेवतापरिसेवितायै कामगिरिपीठस्थितायै
पूर्वाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः।

श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं ओं ह्रीं ऐं क्लिन्ने क्लिन्नमदद्रवे कुले ह्सौः।
दक्षिणाम्नाय समयविद्येश्वरी भोगिनीदेव्यम्बा श्रीपादुकां
पूजयामि तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं मूलं भैरवाष्टकनवसिद्धौघवटुकत्रयपदयुग
सहितायै सौभाग्यविद्यादिसमयविद्येश्वरीपर्यन्तत्रिंशत्सहस्र
देवतापरिसेवितायै पूर्णगिरिपीठस्थितायै
दक्षिणाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः।
श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं ह्स्रैं ह्स्रीं ह्स्रौः ह्स्ख्फ्रें भगवत्यम्बे
हसक्षमलवरयूं ह्स्स्ख्फ्रें अघोरमुखि छ्रां छ्रीं किणि किणि
विच्चे ह्स्रौः ह्स्ख्फ्रें ह्स्रौः।
पश्चिमाम्नायसमयविद्येश्वरीकुब्जिकादेव्याम्बाश्रीपादुकां
पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं मूलं दशदूतीमण्डलत्रयदशवीर
चतुःषष्टिसिद्धनाथसहितायै लोपामुद्रादिसमयविद्येश्वरी
पर्यन्तद्विसहस्रदेवतापरिसेवितायै जालन्धरपीठस्थितायै
पश्चिमाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः।
श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं ह्स्ख्फ्रें महाचण्डयोगीश्वरी कालिका फट्।
उत्तराम्नायसमयविद्येश्वरी देव्यम्बा श्रीपादुकां पूजयामि
तर्पयामि नमः।

ओं ऐं ह्रीं श्रीं मूलं नवमुद्रापञ्चवीरावली सहितायै
तुर्याम्बादिसमय विद्येश्वरीपर्यन्त द्विसहस्रदेवतापरिसेवितायै

ओड्याणपीठस्थितायै उत्तराम्नायसमष्टिरूपिण्यै
श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दरी श्रीपादुकां
पूजयामि तर्पयामि नमः।
(ततः अङ्गप्रत्यङ्गदेवतार्चनं कृत्वा,मूलेन देवीं त्रिः संतर्पयेत्।)

*Perform Pujana and Tarpana to Bala, Ashvarudha and Annapurna with respective mantras and again offer Pujana and Tarpana to Mother Lalita with Mulamantra thrice.*

---

* षोडश्युपासकानाम् । *( For those who are initiated into Shodashi mantra.)*

ओं ऐं ह्रीं श्रीं मखपरयए महाचनडउ गएशवक्र
ऊर्ध्वाम्नायसमयविद्येश्वरी सुन्दर्यम्बा
श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं मूलं श्रीमन्मालिनिमन्त्रराजगुरुमण्डलसहितायै
पराम्बादिसमयविद्येश्वरीपर्यन्ताशीतिसहस्रदेवतापरिसेवितायै
शाम्भवपीठस्थितायै ऊर्ध्वाम्नायसमष्टिरूपिण्यै
श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दरी पराभट्टारिका
श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं भगवति विच्चे महामाये मातङ्गिनि ब्लूं
अनुत्तरवाग्वादिनि ह्स्ख्फ्रें ह्स्ख्फ्रें ह्स्रौः।
(हिंस् औ अः अहं ह्सौः अं सौः अं अहं अनुत्तरसमयविद्येश्वरी
महासुन्दर्यम्बा श्रीपादुकां पूजयामि तर्पयामि नमः।)
अनुत्तरशाङ्कर्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ऐं ह्रीं श्रीं मूलं परिपूर्णानन्दनाथादिनवनाथसहितायै
चतुर्दशमूलविद्यादिश्रीपूर्तिविद्यान्तानन्तदेवतापरिसेवितायै
अनुत्तराम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः।
श्रीमहात्रिपुरसुन्दरीपराभट्टारिका
श्रीपादुकां पूजयामि तर्पयामि नमः।

*The following Samashti mantras are not found in Chidanandanatha's manual. But this is given here for the benefit of Upasakas to help them visualise the larger spectrum of the Avarana's.*

## नवावरण समष्टि मन्त्राः

ओं ऐं ह्लीं श्रीं(महाषोडशी)महोड्याणपीठनिलयां कामेश्वराङ्के श्रीशाम्भवपीठस्थां चतुष्षष्ठि उपचारेणतुष्टां षडङ्गयुवतीस्तुतां कामेश्वर्यादिपञ्चदश नित्यारूपिणीं मित्रेशानन्दनाथादियुगनाथेनपूजितां प्रकाशानन्द नाथादिनवनाथेननुतां मुनिवेदनागसंख्या-दिव्यसिद्धमानवौघेनार्चितां सर्वचक्रेश्वरीध्यातां पञ्चश्री पञ्चकोश पञ्चकल्पलता पञ्चकामदुघा पञ्चरत्न बृन्दमण्डितासनसंस्थितां षड्दर्शनषडाम्नाय देवाताराधितां चतुस्समयदेवतापूजितां महामोक्षप्रदां सच्चिदानन्दधर्मात्मक सदानन्दपूर्ण सर्व साक्षि चिद्रूपसादाख्यकलां स्वात्माभिन्नां शून्याशून्यविवर्जितशक्तिं परबैन्दवासिनीं अनाख्याभासां श्रीललिता महात्रिपुरसुन्दरी पराभट्टारिका श्रीपादुकां पूजयामि तर्पयामि नमः

**प्रथमावरणम्**

ओं ऐं ह्लीं श्रीं स्थूलदेहेपादयोर्सूक्ष्मदेहेमूलाधारादधोगताकुलसहस्रकर्णिकामध्ये आज्ञोपरिविन्दौ अं आं सौः शुक्लारुणपीतवर्ण रेखात्रयात्मकचतुरश्ररूप लकारप्रकृतिक पृथ्व्यात्मकस्य पूर्वाम्नायरूप निवृत्तिकलात्मक रतिस्थायीभाव नादशक्त्यात्मक अङ्गारकग्रहाख्य बिन्दुत्रयतेजोत्पत्तिवाग्रूप चतुर्दशार सर्वसौभाग्यदायक शक्तिचक्राभिरविनाभाव-संबन्ध-शिवचक्ररूप महासुखप्रद सृष्टिसृष्ट्यात्मक जाग्रदवस्थास्वरूप त्रैलोक्यमोहन चक्राधिष्ठात्री सर्वजीवेश्वरी अघोरकुब्जिकानुत अं आं इं ईं उं ऊं ऋं ॠं हं प्रकाशात्मक उन्मन्याकाशानन्दनाथ सेवित चार्वाकसिद्धान्तस्थापित चण्डिकारूपिणि बौद्धदर्शनदर्शित तारास्वरूपिणि दशमहाविद्यायां धूमावत्यभिन्न सिद्धाञ्जन-चिन्तामणि-शूल कपालहस्त अणिमादिदश ब्राह्मीसदृश- मातृकाष्टक खड्ग-खेटक-मुद्राङ्कितहस्तद्वय सर्वसंक्षोभिण्यादि मुद्रादशक शृङ्गाररसात्मक अष्टाविंशति

प्रकटयोगिनि मयूखावृत अणिमासिद्धिसहित सर्वसंक्षोभिणिमुद्रा-दर्शनमुदित स्फटिकाभ-मुक्ताभरण-पुस्तकाक्षमाला पद्मद्वयकर-त्रिपुराचक्रेश्वरीरूप-कामसुन्दर्यभिन्न श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## द्वितीयावरणम्

ओं ऐं ह्रीं श्रीं स्थूलदेहे जान्वोर्सूक्ष्मदेहे अकुलसहस्रोपरिविषुवसंज्ञकरक्तवर्ण षड्दलकमलकर्णिकामध्ये बिन्द्वुपरि अर्धचन्द्रे ऐं क्लीं सौः श्वेतवर्णषोडश दलात्मक सकारप्रकृतिक षोडशकलात्मकचन्द्रस्वरूपे स्रवदमृतरसे पूर्वाम्नायरूप प्रतिष्ठाकलात्मक उत्साहस्थायीभाव बिन्दुशक्त्यात्मक सोमग्रहाख्य वैखरीवाग्रूप दशारद्वयसर्वार्थसाधक सर्वरक्षाकर द्विशक्तिचक्राभि--रविनाभावसंबन्ध शिवचक्ररूप सृष्टिस्थित्यात्मक स्वप्नावस्थास्वरूप सर्वाशापरिपूरक चक्राधिष्ठात्री सर्वमन्त्रेश्वरी वज्रकुब्जिकानुत लृं लॄं एं ऐं ओं औं अं अःसं विमर्शात्मक समाकाशानन्दनाथसेविता बौद्धसिद्धान्तस्थापित वज्रतारारूपिणि वैदिकदर्शन दर्शित गायत्रीस्वरूपिणि दशमहाविद्याया बगळादेव्यभिन्नां प्रवाळवर्णखड्गखेटकशरचापधृत कामाकर्षणी नित्याकलादेव्यादि वीररसात्म षोडशगुप्तयोगिनि मयूखावृत लघिमासिद्धि सहित सर्वविद्राविणिमुद्रा दर्शनमुदित शुभ्रवर्ण पाशाङ्कुश वराभयकर त्रिपुरेशीचक्रेश्वरीरूप तारासुन्दर्यभिन्न श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## तृतीयावरणम्

ओं ऐं ह्रीं श्रीं स्थूलदेहे ऊरुमूलयोर्सूक्ष्मदेहेमूलाधारचतुर्दलकमलकर्णिकामध्ये अर्धचन्द्रोपरि रोधिन्यां ह्रीं क्लीं सौः जपाकुसुमसंकाश अष्टदलात्मक हकारप्रकृतिकाष्टमूर्त्यात्मक शिवाभिन्ने पूर्वाम्नायरूप विद्याकलात्मक शोकस्थायीभाव कलाशक्त्यात्मक सूर्यग्रहाख्य वैखरीवाग्रूप अष्टार सर्वरोगहर

शक्ति चक्राभिरविनाभावसंबन्ध शिवचक्ररूप सृष्टिसंहारात्मक सुषुप्त्यावस्था--स्वरूप सर्वासंक्षोभणचक्राधिष्ठात्री सर्वतन्त्रेश्वरी समयकुब्जिकानुत कं खं गं घं ङं क्षं आनन्दात्मक व्यापकाकाशानन्दनाथसेविता जैनसिद्धान्तस्थापित अर्हन्तारूपिणि वैदिकदर्शन दर्शित गायत्रीस्वरूपिणि दशमहाविद्यायां त्रिपुरभैरव्यभिन्नां इक्षुचाप-पुष्पबाण उत्पल-पुष्पबन्धुधृत अनङ्गकुसुमादि करुणरसात्म अष्टगुप्ततरयोगिनि मयूखावृत महिमासिद्धिसहित सर्वाकर्षणिमुद्रा-उन्मुद्रनमुदित रक्तवर्ण-पुस्तकाक्षमाला-वराभयकर त्रिपुरसुन्दरिचक्रेश्वरीरूप रमासुन्दर्यभिन्न श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## चतुर्थावरणम्

ओं ऐं ह्रीं श्रीं स्थूलदेहे नाभौ सूक्ष्मदेहेस्वधिष्ठानषड्दलकमलकर्णिकामध्ये रोधिन्योपरि नादे हैं ह्क्लीं ह्सौः दाडिमीप्रसूनसहोदरे चतुर्दशार ईकारप्रकृतिक चतुर्दशारभुवनात्मक महामायास्वरूप दक्षिणाम्नायरूप शान्ताकलात्मक भयानकस्थायीभाव ज्येष्ठाशक्त्यात्मक शनैश्चरग्रहाख्य मध्यमावाग्रूप चतुरश्रत्रयात्मत्रैलोक्यमोहन शिवचक्राभिरविनाभावसंबन्ध शक्तिचक्ररूप स्थितिसृष्ट्यात्मक ईश्वरोपासनातत्त्वस्वरूप सर्वसौभाग्यदायक चक्राधिष्ठात्री सर्वतत्त्वेश्वरी घोरकुब्जिकानुत चं छं जं झं ञं मं ज्ञानात्मक शक्त्याकाशानन्द--नाथसेविता सांख्यसिद्धान्तस्थापित मूलप्रकृतिरूपिणि सौरदर्शन दर्शित मार्ताण्डभैरवस्वरूपिणि दशमहाविद्यायां भुवनेश्वर्यभिन्नां आग्नेयचाप-बाण-खड्ग-खेटकधर-सर्वसंक्षोभिण्यादि भयानकरसात्म चतुर्दशसंप्रदाय-योगिनि मयूखावृत ईशित्वसिद्धिसहित सर्ववशंकरीमुद्रा समुन्मीलनमुदिता रक्तवर्ण पुस्तकाक्षमाला वराभयकर त्रिपुरवासिनी चक्रेश्वरीरूप माया-सुन्दर्यभिन्न श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## पञ्चमावरणम्

ओं ऐं ह्रीं श्रीं स्थूलदेहे हृदये सूक्ष्मदेहेमणिपूरकदशदलकमलकर्णिकामध्ये नादोपरि नादान्ते ह्सैं ह्स्क्लीं ह्सौः प्रभापराभूत सिन्दूरवर्णे बहिर्दशार एकार प्रकृतिक दशावतारात्मक विष्णुस्वरूपे दक्षिणाम्नायरूप शान्ताकलात्मक जुगुप्सास्थायीभाव रौद्रीशक्त्यात्मक राहुग्रहाख्य मध्यमावाग्रूप षोडशदळ सर्वाशापरिपूरक शिवचक्राभिरविनाभावसंबन्ध शक्तिचक्ररूप स्थितिस्थित्यात्मक गुरूपसदनातत्त्वस्वरूप सर्वार्थसाधक-चक्राधिष्ठात्री सर्वपीठेश्वरी वीरकुब्जिकानुत टं ठ डं ढं णं लं सत्यात्मक ध्वन्याकाशानन्द-नाथसेविता वैदिकसिद्धान्तस्थापित गायत्रीरूपिणि वैष्णवदर्शन दर्शित विष्णुस्वरूपिणि दशमहाविद्यायां कमलात्मिकाभिन्ना परशु-पाश-गदा-घण्टाधर सर्वसिद्धिप्रदादि बीभत्सरसात्म दश कुलोत्तीर्णयोगिनि-मयूखावृत वशित्वसिद्धिसहित सर्वोन्मादिनीमुद्रा उद्घाटनमुदिता उद्यत्सूर्यसहस्राभा पुस्तकाक्षमाला -वराभयकर त्रिपुराश्रीचक्रेश्वरीरूप वाक्सुन्दर्यभिन्न श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## षष्ठावरणम्

ओं ऐं ह्रीं श्रीं स्थूलदेहे कण्ठे सूक्ष्मदेहे अनाहतद्वादशदलकमलकर्णिकामध्ये नादान्तोपरि शक्तौ ह्रीं क्लीं ब्लें जपासुमनसहचरे अन्तर्दशार रेफप्रकृतिक दशकलात्मक वैश्वानराभिन्ने दक्षिणाम्नायरूप शान्ताकलात्मक क्रोधस्थायीभाव वामाशक्त्यात्मक केतुग्रहाख्य मध्यमावाग्रूप षोडशदळसर्वाशापरिपूरक शिवचक्राभिरविनाभावसंबन्ध शक्तिचक्ररूप स्थितिसंहारात्मक श्रवणतत्त्व स्वरूप महाज्ञानप्रदसर्वरक्षाकरचक्राधिष्ठात्री सर्वयोगेश्वरी जयकुब्जिकानुत तं थं दं धं नं वं पूणात्मक ध्वनिमात्राकाशानन्दनाथसेविता सौरसिद्धान्त स्थापित मार्ताण्डभैरवरूपिणि वैष्णवदर्शन दर्शित विष्णुस्वरूपिणि दशमहाविद्यायां मातङ्ग्याभिन्नां श्वेतवर्ण वज्र-शक्ति-तोमर-चक्रधर सर्वज्ञादि-

अद्भुतरसात्म-दश-निगर्भयोगिनि-मयूखावृत प्राकाम्य सिद्धिसहित सर्वमहाङ्कुशमुद्रा अङ्कुरणमुदितां रक्तवर्ण पाशाङ्कुश-कपालाभयकर त्रिपुरमालिनीचक्रेश्वरीरूप दिव्यसुन्दर्यभिन्न श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## सप्तमावरणम्

ओं ऐं ह्रीं श्रीं स्थूलदेहे मुखे सूक्ष्मदेहे विशुद्धषोडशदलकमलकर्णिकामध्ये शक्तोपरि व्यापिकायां ह्रीं श्रीं सौः पद्मरागरुचिर अष्टार ककारप्रकृति-कऽष्टमूर्त्यात्मक कामेश्वरस्वरूपे पश्चिमाम्नायरूप शान्त्यतीतकलात्मक हास्यस्थायीभाव विषघ्नीशक्त्यात्मक बुधग्रहाख्य मध्यमावाग्रूप अष्टदळ-सर्वसंक्षोभणशिव चक्राभिरविनाभाव संबन्ध शक्तिचक्ररूप संहारसृष्ट्यात्मक मननतत्त्वस्वरूप सर्वरोगहरचक्राधिष्ठात्री सर्ववागीश्वरी सिद्धकुब्जिकानुत पं फं बं भं मं रं स्वभावात्मकानाहताकाशानन्दनाथसेविता वैष्णव सिद्धान्तस्थापित विष्णुरूपिणि शाक्तदर्शन दर्शित भुवनेश्वरीस्वरूपिणि दशमहाविद्यायां ताराऽऽभिन्नां रक्ताशोकपुष्पाभ चाप-बाण-वीणा-पुस्तकधर वशिन्यादि हास्यरसात्म अष्टरहस्ययोगिनि मयूखावृत भुक्तिसिद्धिसहित सर्वखेचरीमुद्रा उररीकरणमुदितशुभ्रवर्णपाशाङ्कुशकपालाभयकर त्रिपुरासिद्धाचक्रेश्वरीरूप परासुन्दर्यभिन्न श्रीललिता महात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## देव्याः आयुधार्चनम्

ओं ऐं ह्रीं श्रीं-नेत्रद्वये द्रां द्रीं क्लीं ब्लूं सः पद्मकैरवकल्हाराम्राशोकपञ्च पुष्परूपेभ्यो सर्वजम्भनेभ्यो रसास्वाद रूपविघ्न हरेभ्यो शब्दस्पर्शरूपरसगन्ध पञ्चतन्मात्ररूपेभ्यो जितेन्द्रियतत्त्वस्वरूपेभ्यो बाणेभ्यो नमः बाणदेवता श्रीपादुकां पूजयामि तर्पयामि नमः

ओं ऐं ह्रीं श्रीं भ्रुवि धं पुण्ड्रेक्षुकोदण्डरूपाय सर्वसम्मोहनाय मनोरूपाय विक्षेपरूप विघ्नहराय अन्तर्मुखशुद्धमन तत्त्व स्वरूपाय धनुषे नमः धनुर्देवता श्रीपादुकां पूजयामि तर्पयामि नमः

ओं ऐं ह्रीं श्रीं कर्णे ह्रीं विद्रुमाकाराय सर्ववशीकरणाय रागस्वरूपाय काषायरूप विघ्नहराय तीव्र आत्मज्ञानेच्छा तत्त्व स्वरूपाय पाशाय नमः पाशदेवता श्रीपादुकां पूजयामि तर्पयामि नमः

ओं ऐं ह्रीं श्रीं नासिकायां क्रों रौप्यमयाय सर्वस्तम्भनाय क्रोधाकाराय लयरूपविघ्नहराय अनात्म-नामरूप-द्वेषतत्त्व स्वरूपाय अङ्कुशाय नमः अङ्कुशदेवता श्रीपादुकां पूजयामि तर्पयामि नमः

**अष्टमावरणम्**

ओं ऐं ह्रीं श्रीं स्थूलदेहे नेत्रयो सूक्ष्मदेहे लम्बिकाग्रे अष्टदलकमलकर्णिकामध्ये व्यापिकोपरि समनायां ह्स्रैं ह्स्क्ल्रीं ह्स्रौः बन्धूकपुष्पबन्धुकिरणे त्रिकोण नादप्रकृतिक गुणत्रयप्रधानत्रिशक्तिरूप रेखात्रयात्मक उत्तराम्नायरूप चिच्छक्तिकलात्मक विस्मयस्थायीभाव दूतरीशक्त्यात्मक गुरुग्रहाख्य पश्यन्तीवाग्रूप महाबिन्दु-सर्वानन्दमय-शिवचक्राभिरविनाभावसंबन्ध शक्तिचक्ररूप संहारस्थित्यात्मक निधिध्यासनतत्त्वस्वरूप सर्वसिद्धिप्रद चक्राधिष्ठात्री भोगकुब्जिकानुत यं रं लं वं शं यं प्रतिभात्मकेन्द्वाकाशानन्द नाथसेविता शाक्त-सिद्धान्त -स्थापित भुवनेश्वरीरूपिणि शैवदर्शन दर्शित रुद्रस्वरूपिणि दशमहाविद्यायां छिन्नमस्ताऽभिन्नां चापबाणपानपात्र मातुलिङ्ग खड्गफलक नागपाश घण्टाधर कामेश्वर्यादि रौद्ररसात्म अतिरहस्ययोगिनीत्रय मयूखावृत इच्छासिद्धिसहित सर्वबीजमुद्रा विनिर्दर्शन मुदिता-रक्तवर्ण-पुस्तकाक्षमाला वराभयकर त्रिपुराम्बाचक्रेश्वरीरूप मोक्षसुन्दर्यभिन्न श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामिनमः

## नवमावरणम्

ओं ऐं ह्रीं श्रीं स्थूलदेहे मूर्ध्नि सूक्ष्मदेहे आज्ञायां द्विदलकमलकर्णिकामध्ये समनोपरि उन्मन्यां महाबिन्दौ कएईलह्रीं हसकहलह्रीं सकलह्रीं उद्यत्सूर्य-सहस्राभबिन्दौ विन्दुप्रकृतिक परब्रह्मात्मक ऊर्ध्वानुत्तराम्नायरूप चिच्छक्ति कलात्मक समस्थायीभाव सर्वानन्दमयशक्त्यात्मक शुक्रग्रहाख्य परावाग्रूप त्रिकोणसर्वसिद्धिप्रद शक्तिचक्राभिरविनाभावसंबन्ध शिवचक्ररूप संहारसंहारात्मक समाधितत्त्वस्वरूप महाकीर्तिप्रद सर्वानन्दमयचक्राधिष्ठात्री सर्वसिद्धेश्वरी मोक्षकुब्जिकानुत षं सं हं ळं क्षं ऊं सुभगात्मक बिन्द्वाकाशा नन्दनाथ सेविता शैवसिद्धान्तस्थापित सदाशिवरूपिणि शाम्भवदर्शन दर्शिता कालसङ्कर्षिणि स्वरूपिणि दशमहाविद्यायां वामेसुन्दरि दक्षिणे कालिकारूपेण दर्शनप्रद महोड्याणपीठनिलय कदम्ब वनान्तः हिरण्मयसहस्रदळकमल कर्णिकामध्ये साध्यसिद्धासन प्रसूनतूलिकायां स्वसमानाकारवर्णवेषाढ्य श्रीमत्कामेश्वराङ्के स्वस्तिकासने उपविष्ट विद्रुम पाशाङ्कुश इक्षुचापपञ्च-पुष्पबाणधर महात्रिपुरसुन्दरि शान्तरसात्मक परापररहस्ययोगिनि प्राप्तिसर्वकाम सिद्धिद्वयसहित सर्वयोनिसर्वत्रिखण्डा मुद्राद्वय प्रदर्शनशित मुदिता-महात्रिपुरसुन्दरीचक्रेश्वर्यभिन्न निर्वाणसुन्दर्यभिन्न श्रीललितामहा त्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

### श्रीललितामहात्रिपुरसुन्दरी विशेषभाव मन्त्राः

ओं ऐं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं **श्रीसौभाग्यविद्यास्**वरूपिणि श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

ओं ऐं ह्रीं श्रीं हसकलह्रीं हसकहलह्रीं सकलह्रीं **श्रीचैतन्यविद्यास्**वरूपिणि श्रीमहात्रिपुरसुन्दरीश्रीपादुकांपूजयामितर्पयामि नमः

ओं ऐं ह्रीं श्रीं हसकलहसकहलसकलह्रीं **श्रीतुरीयविद्यास्**वरूपिणि श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

ओं ऐं ह्लीं श्रींकएईलह्सकहलसकलह्रीं **श्रीपूर्तिविद्यास्वरूपिणि** श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

## दशमहाविद्यासमष्टिमन्त्राः

**ॐक्रींक्रींक्रींहूंहूंह्रींह्रीं दक्षिणेकालिके क्रींक्रींक्रींहूंहूंह्रींह्रीं स्वाहा** पूर्वदिशि महारात्रौ आश्विनकृष्णाष्टम्याविर्भूतां कृष्णवर्णां शवारूढां महाभीमां घोरदंष्ट्र ललज्जिह्व हसन्मुखीं सद्यःछिन्नशिर-कृपाण-वरदाभयभुजां मातृकावर्णात्म-मुण्डमालाधरां सहस्रशव-कर-काञ्चीयुतां घोररूपशिवाभि-रावृत-श्मशान निलयां महाकाल-हृदयोपरि-नृत्तयन्तीं एकाक्षर-गणेशप्रियां हेतुकवटुक-लालितां अप्सरो-मण्डलस्थां महामधुमती-यक्षिणीसेव्यां उपनिषत्सु-संवर्गविद्यारूपिणीं कृष्णावताररूपां आद्यां विद्याराज्ञीसंज्ञिकां श्रीदक्षिणकालिका श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ त्रीं ह्रीं हूं फट् स्वाहा** ऊर्ध्वदिशि क्रोधरात्रौ चैत्रशुक्लनवम्याविर्भूतां नीलवर्णां चितादाहितशवारूढां महाभीमां घोरदंष्ट्र बृहत्कुचलम्बोदरयुतां कर्त्रीकपालचषकत्रिशूलभुजां मुण्डमालाधरां नग्नां श्मशाननिलयां नागरूप अक्षोभ्यं शिरसावहां द्वयाक्षरगणेशप्रियां त्रिपुरान्तकवटुकलालितां किन्नरीमण्डलस्थां पद्मावती यक्षिणीसेव्यां उपनिषत्सु अक्षरविद्यारूपिणीं रामावताररूपां द्वितीयां एकजटासंज्ञिकां श्रीतारादेवी श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ कएईलह्रीं हसकहलह्रीं सकलह्रीं** ऐशान्यदिशि दिव्यरात्रौ मार्गशीर्ष पौर्णम्याविर्भूतां सिन्दूरारुणविग्रहां अमृताम्बोदिमध्यस्थ रत्नद्वीपे नानावृक्षमहोद्यान कदम्बवनपद्माटवीमध्यस्थां वागीशीश रमेश रुद्र चरण सदाशिव फलक पञ्चब्रह्मासन मञ्छारूढां विद्रुमपाश रौप्याङ्कुश इक्षुचाप पञ्चपुष्पबाण

चतुर्भुजां शोणाम्बरस्त्रगां स्वसमानाकार वर्णवेष कामेश्वराङ्कस्थां वल्लभा गणेशप्रियां आपदुद्धारणवटुकलालितां गन्धर्वमण्डलस्थां भ्रमराम्बा यक्षिणीसेव्यां उपनिषत्सु वैश्वानरविद्यारूपिणीं कल्क्यावतार रूपां श्रीविद्यासंज्ञिकां श्रीललिता त्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ ह्रीं** उत्तरदिशि सिद्धरात्रौ भाद्रपदशुक्लद्वादश्याविर्भूतां उद्यत्सूर्यसहस्त्रवर्णां श्रीमत्सिंहासनारूढां पाशाङ्कुश वरदाभय चतुर्भुजां रक्तवस्त्रधरां मणिद्वीप मध्यस्थां महादेवसहितां महागणेशप्रियां अग्निजिह्वावटुकलालितां भूतिनीमण्डलस्थां त्रैलोक्यमोहिनीयक्षिणीसेव्यां उपनिषत्सु परोर्वयासिविद्या रूपिणीं वराहावताररूपां भुवनाधिपतिसंज्ञिकां श्रीभुवनेश्वरी श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ ह्स्त्रैं ह्स्क्लीं ह्स्त्रौः** अधोदिशि कालरात्रौ माघपूर्णिमाविर्भूतां रक्तवर्णां फुल्लकल्हारस्थां मुण्डमालाधरां पुस्तकाक्षमालवराभयचतुर्भुजां वटुकाख्य त्रिपुरभैरवसहितां क्षिप्रप्रसादगणेशप्रियां एकपादवटुकलालितां कूष्माण्ड मण्डलस्थां चन्द्ररेखायक्षिणीसेव्यां उपनिषत्सु शाण्डिल्यविद्यारूपिणीं नृसिंहावताररूपां बालासंज्ञिकां श्रीत्रिपुरभैरवी श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ श्रीं ह्रीं क्लीं ऐं वज्रवैरोचनीये हूं हूं फट् स्वाहा** दक्षिणदिशि वीररात्रौ वैशाखशुक्लचतुर्दश्याविर्भूतां रक्तवर्णां विपरीतरत्यासक्त-रतिकामारूढां कर्त्री स्वछिन्नशिर धृतभुजद्वयां नग्नां गलद्रक्तधारा-पिबन्तीं वर्णिनी डाकिनी पार्श्वद्वयां क्रोधभैरवसहितां चतुराक्षरगणेशप्रियां वह्निवेतालवटुकलालितां सिद्धगुह्य कमण्डलस्थां लम्पटायक्षिणीसेव्यां उपनिषत्सु ज्योतिर्विद्यारूपिणीं परशुरामावताररूपां प्रचण्डचण्डिकासंज्ञिकां श्रीछिन्नमस्ता श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ धूं धूं धूमावति स्वाहा** आग्नेयदिशि दारुणरात्रौ ज्येष्ठशुक्लाष्टम्याविर्भूतां धूम्रवर्णां काकध्वजरथस्थां मार्जनीशूर्पणी भुजद्वयां विमुक्तकेश मलिनाम्बरां कालभैरवसहितां वीरगणेशप्रियां श्रीकालवटुकलालितां नागिनीमण्डलस्थां भीषणीयक्षिणीसेव्यां उपनिषत्सु भूमाविद्यारूपिणीं वामनावताररूपां आर्द्रपटीसंज्ञिकां श्रीधूमावती श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ ह्लीं बगळामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा** पश्चिमदिशि वीररात्रौ वैशाखशुक्लाष्टम्याविर्भूतां पीतवर्णां सुधाब्धिमध्यमणिमण्डप रत्नवेदिसिंहासनस्थां पीतवस्त्राभरणधरां मुद्गरवैरिजिह्वाधृतभुजद्वयां मृत्युञ्जयसहितां सिंहागणेशप्रियां त्रैलोक्यवटुक लालितां पिशाचमण्डलस्थां बिडालिकाय क्षिणीसेव्यां उपनिषत्सु इन्द्रयोनि विद्यारूपिणीं कूर्मावताररूपां ब्रह्मास्त्रसंज्ञिकां श्रीबगळामुखी श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ ह्रीं क्लीं हूं मातङ्ग्यै फट् स्वाहा** वायुदिशि मोहरात्रौ वैशाखशुक्ल तृतीयाविर्भूतां श्यामलवर्णां सद्रत्नसिंहासनस्थां रत्नविचित्रभूषणधरां अङ्कुशासिपाशखेटकयुतचतुर्भुजां मतङ्गसहितां हरिद्रागणेशप्रियां श्रीभीमवटुकलालितां डाकिनी मण्डलस्थां श्रीमनोहारिणियक्षिणीसेव्यां उपनिषत्सु उद्गीथविद्यारूपिणीं बलभद्रावताररूपां श्यामळासंज्ञिकां श्रीमातङ्गी श्रीपादुकां पूजयामि तर्पयामि नमः

**ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः** निर्ऋत्यांदिशि महारात्रौ मार्गशीर्षामावास्याविर्भूतां हेमवर्णां कमलासनस्थां पद्ममालाधरां पद्मद्वयवराभयचतुर्भुजां नारायणसहितां वश्यगणेशप्रियां करालवटुकलालितां शाबरमण्डलस्थां धनदायक्षिणीसेव्यां उपनिषत्सु मधुविद्यारूपिणीं मत्स्यावताररूपां महालक्ष्मीसंज्ञिकां श्रीकमलात्मिका श्रीपादुकां पूजयामि तर्पयामि नमः

*Now offer flowers while chanting the twelve names of Varahi, sixteen names of Mantrini and twenty five names of Lalita which were used by the celestials while the Mother started on her war campaign against Bhandasura.*

## दण्डनाथानामानि

| | | | |
|---|---|---|---|
| ओं पञ्चम्यै | नमः | ओं पोत्रिण्यै | नमः |
| ओं दण्डनाथायै | नमः | ओं शिवायै | नमः |
| ओं संकेतायै | नमः | ओं वार्ताल्यै | नमः |
| ओं समयेश्वर्यै | नमः | ओं महासेनायै | नमः |
| ओं समयसंकेतायै | नमः | ओं आज्ञाचक्रेश्वर्यै | नमः |
| ओं वाराह्यै | नमः | ओं अरिघ्न्यै | नमः |

## मन्त्रिणीनामानि

| | | | |
|---|---|---|---|
| ओं संगीतयोगिन्यै | नमः | ओं वीणावत्यै | नमः |
| ओं श्यामायै | नमः | ओं वैणिक्यै | नमः |
| ओं श्यामलायै | नमः | ओं मुद्रिण्यै | नमः |
| ओं मन्त्रनायिकायै | नमः | ओं प्रियकप्रियायै | नमः |
| ओं मन्त्रिण्यै | नमः | ओं नीपप्रियायै | नमः |
| ओं सचिवेशान्यै | नमः | ओं कदम्बेश्यै | नमः |
| ओं प्रधानेश्यै | नमः | ओं कदम्बवनवासिन्यै | नमः |
| ओं शुक्रप्रियायै | नमः | ओं सदामदायै | नमः |

## ललिता नामानि

| | | | |
|---|---|---|---|
| ओं सिंहासनेश्यै | नमः | ओं वराङ्कुशायै | नमः |
| ओं ललितायै | नमः | ओं चापिन्यै | नमः |
| ओं महाराज्ञ्यै | नमः | ओं त्रिपुरायै | नमः |

ओं महात्रिपुरसुन्दर्यै नमः
ओं सुन्दर्यै नमः
ओं चक्रनाथायै नमः
ओं सम्राज्ञ्यै नमः
ओं चक्रिण्यै नमः
ओं चक्रेश्वर्यै नमः
ओं महादेव्यै नमः
ओं कामेश्यै नमः
ओं परमेश्वर्यै नमः
ओं कामराजप्रियायै नमः
ओं कामकोटिकायै नमः
ओं चक्रवर्तिन्यै नमः
ओं महाविद्यायै नमः
ओं शिवानङ्गवल्लभायै नमः
ओं सर्वपाटलायै नमः
ओं कुलनाथायै नमः
ओं आम्नायनाथायै नमः
ओं सर्वाम्नायनिवासिन्यै नमः

ओं श्रृङ्गारनायिकायै नमः

(अथ यथावकाशं सहस्रनामावल्यादिना अर्चनं कुर्यात् ।)

*One may perform archana with flowers or kumkum while chanting Lalita Sahasranama or Trishati or both.*

## धूपः

*Offer incense while chanting these mantras.*

ओं ऐं ह्रीं श्रीं धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्वयंवयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृꣳहस्व माह्वार्मित्रस्य त्वाचक्षुषा प्रेक्षे मामेर्मा संविक्था मा त्वा हिꣳसिषम् ।

ओं श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः धूपमाघ्रापयामि। धूपानन्तरं आचमनीयं समर्पयामि।।

## दीपः

*Wave lamps dipped in Ghee while chanting the mantras.*

ओं ऐं ह्रीं श्रीं उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं मम । पशूꣳश्च मह्यमावह जीवनं च दिशो दिश। मा नो हिꣳसीर्जातवेदो

गामश्वं पुरुषं जगत्। अबिभ्रदग्न आगहि श्रिया मा परिपातय।
ओं श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः
दीपं दर्शयामि। दीपानन्तरं आचमनीयं समर्पयामि।।
(ततः सर्वसंक्षोभिण्यादिमुद्राः प्रदर्शयेत् ।।)

*Show the ten mudras (nine in case of Panchadashi upasakas).*

## नैवेद्यम्

श्रीदेव्यग्रे चतुरश्रमण्डलं सामान्यार्घ्योदकेन विधाय तत्र आधारोपरि स्थापितं सौवर्णरौप्यकांस्यादिस्थालीचषकभरितं भक्ष्यभोज्यचोष्यलेह्यपेयात्मकं रसवद्व्यञ्जनमञ्जुलं प्राज्यकपिलाज्यं दधिदुग्धमुग्धं यथासंभवं वा नैवेद्यं विधाय-

*Naivedya: Draw a square in front of Mother with water from the conch. Place the Naivedya on a plate or a leaf there upon (the Naivedya may preferably consist of sweets, variety rice, vegetables etc., over which ghee must be poured).*

(मूलेन निरीक्ष्य-)

*Chant the Mulamantra and look at the Naivedya.*

ओं ऐं ह्रीं श्रीं ऐं ह्रः-(इति अस्त्रेण प्रोक्ष्य-)

*Chant this Mantra and sprinkle a little water from Panchapatra over the Naivedya.*

ओं ऐं ह्रीं श्रीं ओं जुं सः वौषट् -
(इति सप्तवारमभिमन्त्रितजलेन प्रोक्ष्य चक्रमुद्रां प्रदर्श्य-)

*Hold a little water in the right palm and chant the Mantra seven times and sprinkle it on the Naivedya. Show the Chakra Mudra.*

ओं ऐं ह्रीं श्रीं यं- (इति वायुबीजेनाधोमुखवामकरेण सप्तवारं जपन्तद्गतदोषान् संशोष्य-)

*Chant the Mantra seven times with the left palm facing downwards to remove imperfections in the Naivedya.*

ओं ऐं ह्रीं श्रीं रं – इति वह्निबीजेन अधोमुखदक्षकरेण संदह्य–

*Chant the Mantra seven times with the right palm facing downwards to remove imperfections in the Naivedya.*

ओं ऐं ह्रीं श्रीं वं – इति धेनुमुद्रया अमृतीकृत्य–

*Show Dhenu Mudra while chanting the Mantra.*

ओं ऐं ह्रीं श्रीं मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य–

*Sprinkle few drops of Visheshargya while chanting the Mulamantra.*

ओं ऐं ह्रीं श्रीं मूलेन सप्तवारमभिमन्त्र्य–

*Chant the Mulamantra seven times.*

ओं ऐं ह्रीं श्रीं ओं क्लीं कामदुघे अमोघे वरदे विच्चे स्फुर स्फुर श्रीं परश्रीं।(इति कामधेनुविद्यया धेनुमुद्रयाऽमृतीकृत्य–)

*Show Dhenu Mudra while chanting the Mantra*

(देव्यै पाद्यं अर्घ्यं आचमनीयं दत्वा–)

*Offer water from the conch to Mother as Padya, Arghya and Achamaniya.*

ओं ऐं ह्रीं श्रीं मूलेन देवीं त्रिः संतर्प्य–

*Perform pujana and Tarpana thrice with Mulamantra.*

पात्रान्तरे विशेषार्घ्यं किंचिद्गृहीत्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन्

ओं ऐं ह्रीं श्रीं मूलं साङ्गायै सायुधायै सवाहनायै सपरिवारायै सर्वात्मिकायै श्रीमहात्रिपुरसुन्दरीपराभट्टारिकायै नैवेद्यं कल्पयामि नमः– (इति नैवेद्यपरिसरे संस्थाप्य। कृताञ्जलिः)

*Take a little Visheshargh ya in a small cup and touching the Naivedya plate with left thumb while chanting the Mantra, place it on the Naivedya plate. With folded hands offer the Naivedya while chanting the Mantra.*

ओं ऐं ह्रीं श्रीं हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।

पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि।।

शर्करापायसापूपघृतव्यञ्जनसंयुतम् ।

विचित्ररुचि नैवेद्यं हृद्यमावेदयाम्यहम् ।।

इति निवेद्य ओं भूर्भुवस्सुवः तत्सवितुर्वरेण्यं भर्गोदेवस्य

धीमहि, धियो यो नः प्रचोदयात् ।

देवसवितः प्रसुव। सत्यं त्वर्तेन परिषिञ्चामि। *(Morning)*

देवसवितः प्रसुव। ऋतं त्वा सत्येन परिषिञ्चामि । *(Evening)*

अमृतोपस्तरणमसि । (इति देव्यै आपोशनं दत्वा-)

*Offer a little water to Mother.*

(वामकरेण ग्रासमुद्रां दर्शयन्, दक्षकरेण प्राणादिपञ्चमुद्रा प्रदर्शनपूर्वकं पञ्च प्राणाहुतीः कल्पयेत् । यथा-)



*Holding the left hand in Grasamudra show the Pranadi Panchamudras and offer the Naivedya.*

ओं ऐं ह्रीं श्रीं ऐं प्राणाय स्वाहा।



ओं ऐं ह्रीं श्रीं क्लीं अपानाय स्वाहा।



ओं ऐं ह्रीं श्रीं सौः व्यानाय स्वाहा।



ओं ऐं ह्रीं श्रीं ऐं क्लीं उदानाय स्वाहा।



ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः समानाय स्वाहा।
ओं ऐं ह्रीं श्रीं ब्रह्मणे स्वाहा।



*Offer water thrice from the conch to Mother.*

ओं ऐं ह्रीं श्रीं ऐं क ए ई ल ह्रीं आत्मतत्त्वव्यापिका
श्रीमहात्रिपुरसुन्दरी तृप्यतु।
ओं ऐं ह्रीं श्रीं क्लीं ह स क ह ल ह्रीं विद्यातत्त्वव्यापिका
श्रीमहात्रिपुरसुन्दरी तृप्यतु।
ओं ऐं ह्रीं श्रीं सौः स क ल ह्रीं शिवतत्त्वव्यापिका
श्रीमहात्रिपुरसुन्दरी तृप्यतु।
ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं सर्वतत्त्वव्यापिका
श्रीमहात्रिपुरसुन्दरी तृप्यतु।
(इति किंचित्किंचित् सामान्यार्घ्योदकं दद्यात् ।)

ओं ऐं ह्रीं श्रीं चित्पात्रे सद्धविस्सौख्यं विविधानेकभक्षणम् ।
निवेदयामि ते देवि सानुगायै जुषाण तत् ।।
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवꣳरजः।
मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः।
माध्वीर्गावो भवन्तु नः।
(इति पुष्पाञ्जलिं विन्यस्य नैवेद्यजातं तादात्म्येन समर्पयेत् ।)

*Offer flowers to the Mother.*

ओं ऐं ह्रीं श्रीं नमस्ते देवदेवेशि सर्वतृप्तिकरं परम् ।
अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ।
अमृतानन्दसंपूर्णं गृहाण जलमुत्तमम् ।।
ओं ऐं ह्रीं श्रीं श्रीललितायै अमृतपानीयं समर्पयामि।

*Place a cup filled with water scented with cardamom.*

भुञ्जानां परदेवतां ध्यायेत् ।

*Contemplate Mother eating the Naivedya.*

ओं ऐं ह्रीं श्रीं ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्ता-
द्दिव्याकल्पैर्ललितरमणी वीज्यमाना सखीभिः।
नर्मक्रीडाप्रहसनपरा हासयन्ती सुरेशान्
भुङ्क्ते पात्रे कनकखचिते षड्रसान् लोकधात्री।।
देवीं भुक्तवतीं सुतृप्तां ध्यात्वा-

*Contemplate the Mother as being satisfied with the offering.*

ओं ऐं ह्रीं श्रीं ओं अमृतापिधानमसि। इत्युत्तरापोशनं दत्वा-

*Offer a little water from Panchapatra.*

ओं ऐं ह्रीं श्रीं श्रीललितायै हस्तप्रक्षालनं गण्डूषं पादप्रक्षालनं आचमनीयं कल्पयामि नमः।

*Offer a little water from Panchapatra thrice.*

(ताम्रबलिपात्रे निवेदनसामग्रीः किंचित्किंचिदादाय निवेदनपात्राणि निर्गमय्य तत्स्थलं अस्त्रेण शोधयेत् ।)

*Draw the Mandala as shown with water from the conch and place copper plate upon it for Bali. Remove the main Naivedya plate and clean the place with Astra Mantra ( Aim Hraha)*



ताम्बूलं -ओं ऐं ह्रीं श्रीं वनस्पतिदेवत्याय ताम्बूलाय नमः ।

(इति सामान्यार्घ्योदकेन प्रोक्ष्य-)

ओं ऐं ह्रीं श्रीं तमालदलकर्पूरपूगभागसमन्वितम् ।
एलापत्रसुसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

ओं ऐं ह्रीं श्रीं ओं श्रीललितायै ताम्बूलं कल्पयामि नमः।।

*Offer Tambula to Mother after sprinkling it with little Samanyarghya.*

कुलदीपः।
ओं ऐं ह्रीं श्रीं मूलं अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्।
त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये।।

*Light a lamp akin to the Mangalaratrika and wave it. Offer flowers.*

## कर्पूरनीराजनम्

*Wave camphor while chanting the Mantra.*

ओं ऐं ह्रीं श्रीं सोमो वा एतस्य राज्यमादत्ते। यो राजा सन्राज्यो वा सोमेन यजते। देवसुवामेतानि हवी ँषि भवन्ति। एतावन्तो वै देवाना ँसवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसू राजा भवति।

ओं ऐं ह्रीं श्रीं साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठिकं राज्यं महाराज्यमाधिपत्यम्।। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तंमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।। राजाधिराजाय प्रसह्यसाहिने नमो वयं वैश्रवणाय कुर्महे। समेकामांकामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय महाराजाय नमः।।

# मन्त्रपुष्पम्

*Offer flowers.*

ओं ।। योऽपां पुष्पं वेद । पुष्पवान् प्रजावान् पशुमान् भवति। चन्द्रमा वा अपां पुष्पम्। पुष्पवान् प्रजावान् पशुमान् भवति। य एवं वेद। योऽपामायतनं वेद। आयतनवान् भवति। अग्निर्वा अपामायतनम्। आयतनवान् भवति। योऽग्नेरायतनं वेद।।

आयतनवान् भवति। आपो वा अग्नेरायतनम्। आय तनवान् भवति। य एवं वेद। योऽपामायतनं वेद। आयतनवान् भवति। वायुर्वा अपामायतनम्। आयतनवान् भवति। यो वायोरायतनं वेद। आयतनवान् भवति।।

आपो वै वायोरायतनम्। आयतनवान् भवति। य एवं वेद। योऽपामायतनं वेद। आयतनवान् भवति। असौ वै तपन्नपामायतनम्। आयतनवान् भवति। योऽमुष्य तपत आयतनं वेद। आयतनवान् भवति। आपो वा अमुष्य तपत आयतनम्।।

आयतनवान् भवति। य एवं वेद। योऽपामायतनं वेद। आयतनवान् भवति। चन्द्रमा वा अपामायतनम्। आयतनवान् भवति। यश्चन्द्रमस आयतनं वेद। आयतनवान् भवति। आपो वै चन्द्रमस आयतनम्। आयतनवान् भवति।।

य एवं वेद। योऽपामायतनं वेद। आयतनवान् भवति। नक्षत्राणि वा अपामायतनम्। आयतनवान् भवति। यो नक्षत्राणा मायतनं वेद। आयतनवान् भवति। आपो वै नक्षत्राणामायतनम्। आयतनवान् भवति। य एवं वेद।।

योऽपामायतनं वेद। आयतनवान् भवति। पर्जन्यो वा अपामायतनम्। आयतनवान् भवति। यः पर्जन्यस्यायतनं वेद। आयतनवान् भवति। आपो वै पर्जन्यस्यायतनम्। आयतनवान् भवति। य एवं वेद। योऽपामायतनं वेद।।

आयतनवान् भवति। संवत्सरो वा अपामायतनम्। आयतनवान् भवति। यस्संवत्सरस्यायतनं वेद। आयतनवान् भवति। आपो वै संवत्सरस्यायतनम्। आयतनवान् भवति। य एवं वेद। योऽप्सु नावं प्रतिष्ठितां वेद। प्रत्येव तिष्ठति।।

शिवे शिवसुशीतलामृततरङ्गगन्धोल्लस-
न्नवावरणदेवते नवनवामृतस्यन्दिनि।
गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले
षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः।।
समस्तमुनियक्षकिंपुरुषसिद्धविद्याधर-
गुहासुरसुराप्सरोगणमुखैर्गणैः सेविते।
निवृत्तितिलकाम्बरप्रकृतिशान्तिविद्याकला-
कलापमधुराकृते कलित एष पुष्पाञ्जलिः।।

त्रिवेदकृतविग्रहे त्रिविधकृत्यसंधायिनि
त्रिरूपसमवायिनि त्रिपुरमार्गसंचारिणि।
त्रिलोचनकुटुम्बिनि त्रिगुणसंविदुद्यत्पदे
त्रयि त्रिपुरसुन्दरि त्रिजगदीशि पुष्पाञ्जलिः।।

पुरन्दरजलाधिपान्तककुबेररक्षोहर-
प्रभञ्जनधनञ्जयप्रभृतिवन्दनानन्दिते।
प्रवालपदपीठिकानिकटनित्यवर्तिस्वभू-
विरिञ्चिविहितस्तुते विहित एष पुष्पाञ्जलिः।।

यदानतिबलादलंकृतिरुदेति विद्यावय-
स्तपोद्रविणसौरभाकृतिकवित्वसंपन्मयी।
जरामरणजन्मजं भयमपैति तस्यै समा-
हिताखिलसमीहितप्रसवभूमि तुभ्यं नमः।।

निरावरणसंविदुद्गमपरास्तभेदोल्लस-
त्पदास्पदचिदेकतावरशरीरिणि स्वैरिणि।
रसायनतरङ्गिणीरुचितरङ्गसंचारिणि
प्रकामपरिपूरणि प्रसृत एष पुष्पाञ्जलिः।।

तरङ्गयति संपदं तदनु संहरत्यापदं
सुखं वितरति श्रियं परिचिनोति हन्ति द्विषः।।
क्षिणोति दुरितानि यत्प्रणतिरम्ब तस्यै सदा
शिवंकरि शिवे परे शिवपुरन्ध्रि तुभ्यं नमः।।

त्वमेव जननी पिता त्वमथ बान्धवस्त्वं सखा
त्वमायुरपरं त्वमाभरणमात्मनस्त्वं कला।
त्वमेव वपुषः स्थितिस्त्वमखिलायतित्वं गुरुः
प्रसीद परमेश्वरि प्रणतिपात्रि तुभ्यं नमः।।

कञ्जासनादिसुरबृन्दलसत्किरीट-
कोटिप्रघर्षणसमुज्ज्वलदङ्घ्रिपीठे।
त्वामेव यामि शरणं विगतान्यभावं
दीनं विलोकय दयार्द्रविलोचनेन।।
श्रीललितामहात्रिपुरसुन्दर्यै नमः। पुष्पाञ्जलिं समर्पयामि।।

# ।। सप्तमः खण्डः।।

## कामकलाध्यानम् ।

*Perform the Kamakala Dhyana as instructed by one's Guru.*

स्थूलं–बिन्दुना मुखं बिन्दुद्वयेन कुचौ सपरार्धेन योनिः
(इति कामकलां ध्यायेत् ।।)

महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दुं स्वयं न्यस्तहार्दम्।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृत्भावयेत्स त्वमेव।।

तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते।
परानन्दसंधानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः।।

सूक्ष्मं –कामकला –
क् + अ + अ, म् + अ, क् +अ, ल् +अ + अ।

कामशब्दविमर्शः

(क् = माया, अ = तदवच्छिन्नं चैतन्यमीश्वरः,अ = शुद्धचैतन्यं; म् = अविद्या, अ = तदवच्छिन्नं चैतन्यं जीवः। मायावच्छिन्नचैतन्यं अविद्यावच्छिन्नचैतन्यं च शुद्धचैतन्यमेव। उपाधिनिरसनेन जीवेश्वरौ शुद्धब्रह्मणोऽभिन्नौ। सामानाधिकरण्येन जीव एव ईश्वरः। भागत्याग लक्षणयाऽयमर्थः पर्यवसन्नः। अहं सः= हंस; सः अहं = सोहम्।)

कलाशब्दविमर्शः–

(क् =आकाशं, अ=तदुपहितचैतन्यं, ल् =पृथिवी, अ=तदुपहितचैतन्यं, अ=शुद्धचैतन्यं। पृथिव्याद्याकाशान्तं परिदृश्यमानः सर्वः प्रपञ्चो ब्रह्मैव। सर्वं खल्विदं ब्रह्म इति हि श्रुतिः।

शिवाद्यवनिपर्यन्तपरिदृश्यमानसर्वप्रपञ्चाधिष्ठाननिर्विशेष

ब्रह्मैवाहमित्यखण्डार्थानुसंधानं कामकलाविमर्शः।।
सौभाग्यहृदयम् –)

सौः

(इति शक्तिबीजं श्रीदेव्या हृदयत्वेन भावयेत्। सकारविसर्ग–औकारसमुदायः–सौः इति। सकारः तच्छब्दपर्यायः। विसर्गेण हकारो लक्षितः। स च अहंशब्दपर्यायः । औकारः तयोः सामरस्यबोधकः। बह्मैवाहमिति।।कामकला ध्यातैव सौभाग्यहृदयमामृष्टं भवति।।)

कएईलह्रीं हसकहलह्रीं सकलह्रीं
एईलह्रीं हसकहलह्रीं सकलह्रीं
ईलह्रीं हसकहलह्रीं सकलह्रीं
लह्रीं हसकहलह्रीं सकलह्रीं
ह्रीं हसकहलह्रीं सकलह्रीं
हसकहलह्रीं सकलह्रीं
सकहलह्रीं सकलह्रीं
कहलह्रीं सकलह्रीं
हलह्रीं सकलह्रीं
लह्रीं सकलह्रीं
ह्रीं सकलह्रीं
सकलह्रीं
कलह्रीं
लह्रीं
ह्रीं
रीं
ईं

३ – श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं कएईलह्रीं सौः ऐं क्लीं ह्रीं श्रीं सच्चिदानन्द–परम–सम्विद् ईकारस्य हार्ध–कलानाथ ऊर्ध्वबिन्द्वात्मने श्रीमहात्रिपुरसुन्दर्याः केशादि अवयव सहित वक्त्राय नमः

३ – श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं हसकहलह्रीं सौः ऐं क्लीं ह्रीं श्रीं सच्चिदानन्द–परम–सम्विद् ईकारस्य हार्ध–कलानाथ अधोबिन्दु–युगळात्मने श्रीमहात्रिपुरसुन्दर्याः बाहुचतुष्टयादि–अवयव–सहित स्तनद्वयाय नमः

३ – श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं सच्चिदानन्द–परम–सम्विद् ईकारस्य सपरार्धकलानाथ व्यञ्जकरेखात्मने श्रीमहात्रिपुरसुन्दर्याः पद–द्वयादि–सहित योनये नमः

३ – श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं सच्चिदानन्द परम सम्विद् ईकारस्य

समस्त– कलानाथ श्रीमहात्रिपुरसुन्दर्याः सर्व अवयवेभ्यो नमः

## ॥ अष्टमः खण्डः॥

(होमः)। होमस्य इतिकर्तव्या परिशिष्टे द्रष्टव्या। होमः कृताकृतः। अकरणे न प्रत्यवायः, करणे तु श्रेय एव॥

*One may perform the Homa as per his convenience.*
*(See page:192)*

# ॥ नवमः खण्डः॥

## बलिदानादि हविः प्रतिपत्त्यन्तम्

*Balidana should be performed after the pradhana homa (if homa is done, or else it is done after Kamakala dhyana).*

### बलिदानम्

**(देव्या दक्षभागे सामान्यार्घ्योदकेन त्रिकोणवृतचतुरश्रात्मकं मण्डलं परिकल्प्य)–**

*Offer flowers and akshata on the Mandala already drawn.*

**ओं ऐं ह्रीं श्रीं ऐं व्यापकमण्डलाय नमः–**

**(इति गन्धाक्षतैरभ्यर्च्य–अर्धभक्तपूरितोदकं सक्षीरादित्रयं बलिपात्रं तत्र विन्यस्य)–**

*Put a piece of ginger in the plate and pour the Vishesharghya from the Naivedya plate into it. Fill the plate with water till the Bali is imersed in it.*

**ओं ऐं ह्रीं श्रीं ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा–**

**(इति मन्त्रं त्रिः पठित्वा दक्षकरर्पितं वामकरतत्त्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्वा वामपष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो बाणमुद्रया बलिं भूतैर्ग्रासितं विभाव्य योनिमुद्रया प्रणमेत् ।।)**

*While chanting the Mantra thrice pour a little water running on the left hand held in Tattvamudra. Strike the ground with the left foot and clap the palms with head held high up. Then show Banamudra. Visualizing that the Bali has been accepted by the Balidevata and bow to her with Yonimudra.*

**(ततः पादौ प्रक्षाल्य, आचम्य, प्रदक्षिणनमस्कारं कृत्वा यथाशक्ति जपमाचरेत् ।।)**

*Remove the Bali plate and put it out for living forms such as crows.*

---

(This is Sarvabhutabali. One may also offer KURUKULLA Bali in addition.)

*After cleansing ones hands and feet perform a Namaskara and follow it up with Japa of Mulamantra.*

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा।।
(इति जपं समर्पयेत् ।।)

*Offer the Japa to Mother.*

## स्तोत्रम्

*Chant the following verses in eulogy of Mother.*

ओं ऐं ह्रीं श्रीं गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ।। १
प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम् ।। २
यदक्षैरकमात्रेऽपि संसिद्धे स्पर्धते नरः।
रविताक्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः।। ३
यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ।। ४
यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ।। ५
यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ।। ६
अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।
ज्येष्ठाङ्गबाहुपादाग्रमध्यस्वान्तर्निवासिनीम् ।। ७

तामीकाराक्षरोद्धारां सारात्सारां परात्पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ।। ८

अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ।। ९

वन्दे तामहमक्षय्यां क्षकाराक्षररूपिणीम् ।
देवीं कुलकलोल्लासप्रोल्लसन्तीं परां शिवाम् ।। १०

वर्गानुक्रमयोगेण यस्यां मात्रष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ।। ११

कामपूर्णजकाराख्यश्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ।। १२

इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव तद्यतः ।। १३

भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं शिवे ।। १४

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ।। १५

पिता माता भ्राता गुरुरथ सुहृद्बान्धवजनः ।
प्रभुस्तीर्थं कर्माविकलमिह चामुत्र च हितम् ।
विशुद्धा विद्या वा पदमपि च तत्प्राप्यमसि मे
त्वमेव श्रीमातः स्वपिमि गतशङ्कः सुखतमः ।। १६

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नापय कृपया मामपि शिवे।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः।। १७

हे सद्रूपिणि हे चिदर्चिरुदये हे कामराजप्रिये
हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसंजीविनि।
हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे
हे श्रीमल्ललिताम्ब हे परशिवे मां पाहि डिम्भं निजम्।। १८

नमो हेमाद्रिस्थे शिवसति नमः श्रीपुरगते
नमः पद्माटव्यां कुतुकिनि नमो रत्नगृहगे।
नमः श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये
नमः कामेशाङ्कस्थितिमति नमस्तेऽम्ब ललिते।। १९

जय जय जगदम्ब भक्तवश्ये
जय जय सान्द्रकृपावशान्तरङ्गे।
जय जय निखिलार्थदानशौण्डे
जय जय हे ललिताम्ब चित्सुखाब्धे।। २०

## श्रीगुरुस्तोत्रम्

षडङ्गदेवता नित्या दिव्याद्योघत्रयीगुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः।।

अमुकानन्दनाथाय मम श्रीगुरवे नमः।
अमुकानन्दनाथाय गुरवे परमाय मे।
अमुकानन्दनाथाय गुरवे परमेष्ठिनं ।
यदिदं श्रीगुरुस्तोत्रं स्वस्वरूपोपलक्षणाम् ।

बालभावानुसारेण ममेदं हि विचेष्टितम् ।
मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ।।
एवमादिभिः स्तुतिभिर्देवीं स्तुयात् ।।

## सुवासिनीपूजा।

*Invite a married woman and considering her to be a form of Divine Mother offer the Upacharas such as Asana, Arghya, Achamana, Snana, Vastra, Gandha, Kunkuma, Pushpa, Dhoopa, Deepa, Naivedya and Tambula according to one's convenience. If the Suvasini is initiated into Mulamantra, she should follow the Tattvashodhana procedure after receiving a Visheshargya cup from the worshipper.*

प्राङ्निमन्त्रितां सुवासिनीमाहूय तां देवीरूपां विभाव्य–
ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै अर्घ्यं कल्पयामि नमः।
इत्यादिरीत्या अर्घ्य–आचमन–स्नान–गन्ध–हरिद्राकुङ्कुम–पुष्प–धूप–दीप–नैवेद्य–
ताम्बूलानि दद्यात्, (सति विभवे वसनादीनि च) ।

(सा च दीक्षिता चेत् मूलेन समस्तप्रकटेत्यादिसमष्टिमन्त्रेण च क्रमेण श्रीदेव्यै आवरणदेवताभ्यश्च पुष्पाञ्जलिं दद्यात् । ततस्तस्याः करे क्षीरपात्रं नागरखण्डं च समर्पयेत्। सा च उत्थाय शिरसि श्रीगुरु–पादुकामनुना त्रिरिष्ट्वा, हृदये आत्मचतुष्टयं संतर्प्य, चक्रे देवीं त्रिः संतर्प्य, मूलेन पात्रं वामकरे धृत्वा दक्षकरेणाच्छाद्योपविश्य तत्त्वानि शोधयेत्। कर्तापुनः पात्रान्तरमादाय वक्ष्यमाणमन्त्रेण तस्यै समर्पयेत्।* (अदीक्षिता चेदलिपात्रदानमेव। ) यथा–

*After Tattvashodhana the worshipper should offer another cup filled with Visheshargya to her while chanting the following Mantra.*

ओं ऐं ह्रीं श्रीं अलिपात्रमिदं तुभ्यं दीयते पिशितान्वितम् ।
स्वीकृत्य सुभगे देवि यशो देहि रिपून् जहि।।
इति मन्त्रेण सुवासिन्यै अथवा श्रीदेव्यै समर्पयेत् ।
सापि तत् सावशेषं स्वीकृत्य–

*The Suvasini should drink half of it and return the remaining half chanting the Mantra which offers protection unto the worshipper.*

ओं ऐं ह्रीं श्रीं वत्स तुभ्यं मया दत्तं पीतशेषं कुलामृतम् ।
त्वच्छत्रून् संहरिष्यामि तवाभीष्टं ददाम्यहम् ।।
(इति मन्त्रेण प्रतिदद्यात् । ततः साधकः सुवासिनीं भोजयित्वा संतर्प्य ताम्बूलाद्यैः संतोषयेत्।।)

*The worshipper should feed the Suvasini and offer her Sari, Tambula etc., accordingly.*

## सामयिकपूजा।

*The worshipper should offer in a plate flowers, Akshata, a small cup filled with Vishesharghya and a small piece of ginger from the Shuddhi Patra to all those who have assembled for the puja, if they are initiated into the Mulamantra. The person who receives the plate should perform Tattvashodhana.*

ततः संनिहिते गुरौ गुरुं नत्वा, गन्धकुङ्कुमादिभिरुपचर्य गुरुपादुका मन्त्रेण अभिपूज्य पात्राणि समर्पयेत् । असंनिहिते गुरौ स्वशिरसि गुरुत्रयं यजेत् । संनिहितान् सामयिकानाहूय गन्धकुङ्कुमादिभि रुपचर्य पात्राणि दद्यात् । पश्चात् तत्त्वशोधनं कुर्यात् । सामयिकश्च पात्रमादाय समस्तप्रकटेत्यादिसमष्टिमन्त्रेण पुष्पाञ्जलिं दत्वा स्वशिरसि गुरुत्रयं हृदये आत्मचतुष्टयं च इष्ट्वा देवीं संतर्प्य तत्त्वशोधनं यथोपदिष्टं कुर्यात् ।

## *Tattvashodhana*

*( A general method for performing Tattvashodhana is given here. One may consult the Guru to know the methodology according to their Sampradaya)*

*a) While standing, chant the Samastasrichakrayogini Mantra and offer flowers.*

*b) Worship one's Guru, Paramaguru and Parameshthiguru with Pujana and Tarpana using Gurupaduka Mantra (If the Guru is physically present he may offer his worship directly to him. In absence of one's Guru he may do so on his own pericap.)*

*c) Perform Pujana and Tarpana to Atmachatushtaya with appropriate Mantras by offering flowers to oneself.*

*d) Perform Pujana and Tarpana to all the Deities into whose Mantra he is initiated.*

*e) Finally, perform Shadanga Archana of his Mulamantra.*

*f) Perform Pujana and Tarpana thrice using Mulamantra*

*Hold the Vishesharghya using left hand thumb, index and little fingers folding the middle and ring finger. Break the ginger piece into two and put it in the cup. Cover the cup with the right palm and chant the Tattvashodhana Mantras.*

**ओं ऐं ह्रीं श्रीं कएईलह्रीं प्रकृत्यहंकारबुद्धिमनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरस गन्धाकाशवायुवह्नि सलिलभूम्यात्मना अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः कएईलह्रीं आत्मतत्त्वेन आणवमलशोधनार्थं स्थूलदेहं परिशोधयामि जुहोमि स्वाहा । आत्मा मे शुध्यन्तां ज्योतिरहं विरजा विपात्मा भूयासꣳ स्वाहा।**

**ओं ऐं ह्रीं श्रीं हसकहलह्रीं, मायाकलाऽविद्यारागकाल**

नियतिपुरुषात्मना कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं हसकहलह्रीं विद्यातत्त्वेन मायिकमलशोधनार्थं सूक्ष्मदेहं परिशोधयामि जुहोमि स्वाहा। अन्तरात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपात्मा भूयास ९ स्वाहा।

ओं ऐं ह्रीं श्रीं सकलह्रीं शिव शक्तिसदाशिवेश्वरशुद्ध विद्यात्मना यं रं लं वं शं षं सं हं लं क्षं स क ल ह्रीं शिवतत्त्वेन कार्मिकमलशोधनार्थं कारणदेहं परिशोधयामि जुहोमिस्वाहा। परमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपात्मा भूयास ९ स्वाहा।

ओं ऐं ह्रीं श्रीं मूलं प्रकृत्यहंकारबुद्धिमनस्त्वक् चक्षुः
श्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्था
शब्दस्पर्शरूपरसगन्धाकाशवायु वह्निसलिलभूमि
मायाकलाऽविद्याराग कालनियतिपुरुष
शिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं लं क्षं मूलं सर्वतत्त्वेन सर्वदेहं सर्वदेहाभिमानिनं जीवात्मानं परिशोधयामि जुहोमि स्वाहा। ज्ञानात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ९ स्वाहा। *

---

* षोडश्युपासकानां पञ्चमपात्रेण –
ओं ऐं ह्रीं श्रीं मूलं पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।
*For those who have been initiated into Shodashi, an additional Mantra has to be chanted.*

ओं ऐं ह्रीं श्रीं आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि।योऽहमस्मि ब्रह्माहमस्मि।अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा।।

इति (गुरौ संनिहिते होष्यामि इति संप्रार्थ्य गुरोरनुज्ञां लब्ध्वा) चिदग्नौ होमबुद्ध्या जुहुयात् । ततः पात्रं प्रक्षाल्य तत्र सुवर्णपुष्पाक्षतान्निक्षिप्य)

*After chanting the Mantras, seek the permission of the worshipper by saying "Hoshyami". When he gives permission saying "Juhudhi" he should drink Vishesharghya along with the ginger (if the worshipper himself is performing Tattvashodhana then he may seek the permission mentally from his Guru).*

(इति गुरवे समर्पयेत् । असंनिहिते गुरौ स्वशिरसि पात्रं निधाय आत्मपात्रमण्डले निक्षिपेत् ।।)

*Wash the cup in Shuddhipatra and receive a spoon full of water from the worshipper and cleanse the vessel again. Anoint the vessel with Sandal and kunkum and place a flower, akshata and some money and raise it with the plate to one's head and offer it back to the worshipper chanting the following Mantra.*

ओं ऐं ह्रीं श्रीं देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक। त्राहि त्राहि कृपासिन्धो पात्रं पूर्णतरं कुरु।।

*The worshipper should take the plate, offer the flower to the Deity and give the flower back to the person who has performed the Tattvashodhana along with a fruit, Tambula and Dakshina.*

*Detailed procedure for Patra Sveekaranam is given for the benefit of Upasakas.*

## पात्र स्वीकरणं

**प्रथम पात्र स्वीकरणं**

ओं ऐं ह्रीं श्रीं श्रीमच्छङ्करशेखर प्रविलसच्चन्द्रामृतापूरितं क्षेत्राधीश्वर योगिनीसुरगणैः सिद्धैः समाराधितं।
आनन्दार्णवकं महात्मकमिदं साक्षात् त्रिखण्डात्मकं वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदं।।

ओं ऐं ह्रीं श्रीं कएईलह्रीं त्रिपुरादेवि विद्महे वाग्भवेश्वरि धीमहि
तन्नो मुक्ति प्रचोदयात्।।

ओं ऐं ह्रीं श्रीं ऐं कएईलह्रीं अखण्डैकरसानन्दकरे परसुधात्मनि।
स्वच्छन्दस्फुणामत्र निधेहि कुलनायिके।।

ॐ ऐं वाग्भवाभिन्न प्रणवात्मने भूः भूस्स्वरूपाय भूस्स्वरूपात्मने अं अकारस्वरूपाय अकारस्वरूपात्मने अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः षोडशस्वरखण्डस्वरूपाय षोडशस्वर खण्डस्वरूपात्मने तत्सवितुर्वरेण्यं जातवेदसे सुनवामसोमं त्र्यम्बकं यजामहे प्रथमपादस्वरूपाय प्रथमपादस्वरूपात्मने कएईलह्रीं वाग्भवकूटस्वरूपाय वाग्भवकूटस्वरूपात्मने प्रकृत्यहंकारबुद्धिमनश्श्रोत्र त्वक् चक्षु जिह्वा घ्राण वाक् पाणि पाद पायु उपस्थ शब्द स्पर्श रूप रस गन्ध आकाश वायु वह्नि सलिल भूम्यान्त चतुर्विंशति आत्मतत्त्वाधिपत्यात्मकाय आत्म तत्त्वाधिपत्यात्मने स्थूलशरीराय स्थूलशरीरात्मने जाग्रद्दशाधिष्ठात्मकाय जाग्रद्दशाधिष्ठात्मने विश्वपुरुषाय विश्वपुरुषात्मने विराट्-पुरुषाय विराट्-पुरुषात्मने धूम्रर्चिपादि कव्यावाहान्त धर्मप्रद दशकलात्मक वह्निमण्डलस्वरूपाय वह्निमण्डलस्वरूपात्मने सत्वात्मक-ब्रह्मग्रन्थि विदलन प्रवीणाय वागादिपञ्चेन्द्रिय साक्षिणे आणवमल संशोधनाय

कर्मोपार्जित ब्रह्मणे कुण्डलिनी प्रकाश-मूलकन्दाय कादि-आन्तवर्णस्थ सृष्ट्यादि-सिद्ध्यन्त दशवामाकलात्म-स्वाधिष्ठान-निवास सृष्टिकृत्य इच्छाशक्त्यात्मक वाणीब्रह्मस्वरूप कामगिरिपीठस्थ महाकामेश्वरी मित्रेशानन्दनाथाभ्यां स्वाहा

ओं ऐं ह्रीं श्रीं आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा।।
अरुणोपनिषद् पठनं

**द्वितीय पात्र स्वीकरणं**

ओं ऐं ह्रीं श्रीं हैमं मीनरसावहं दयितयादत्तञ्चपेयादिभिः
किञ्चित् चञ्चलरक्तपङ्कजदशा तस्यै समावेदितं।
वामे स्वादु विशुद्धि शुद्धिकरणं पाणौ निधायात्मके
वन्दे पात्रमहं द्वितीयमधुनाऽऽनन्दैक संवर्धनं।।

ओं ऐं ह्रीं श्रीं हसकहलह्रीं त्रिपुरादेवि विद्महे कामेश्वरि धीमहि
तन्नो क्लिन्ना प्रचोदयात्।।

ओं ऐं ह्रीं श्रीं क्लीं हसकहलह्रीं अकुलस्थामृताकारे शुद्धज्ञानकरेपरे।
अमृतत्त्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि।।

ॐ क्लीं कामराजाभिन्न प्रणवात्मने भुवः भुवस्स्वरूपाय भुवस्स्वरूपात्मने उं उकारस्वरूपाय उकारस्वरूपात्मने कं खं गं घं ङं चं छं जं झं ञं टं ठ डं ढं णं तं थं दं धं नं पं फं बं भं मं पञ्चविंशतिस्पर्शखण्डस्वरूपाय पञ्चविंशति स्पर्शखण्ड स्वरूपात्मने भर्गोदेवस्य धीमह्यारारति यतोनिदहातिवेदःसुगन्धिं पुष्टिवर्धनं द्वितीयपादस्वरूपाय द्वितीयपादस्वरूपात्मने हसकहलह्रीं कामराजकूटस्वरूपाय कामराजकूटस्वरूपात्मने माया कला अविद्या राग काल नियति पुरुषान्त सप्तविद्यातत्त्वाधिपत्यात्मकाय विद्यातत्त्वाधिपत्यात्मने सूक्ष्मशरीराय सूक्ष्मशरीरात्मने स्वप्न दशाधिष्ठात्मकाय स्वप्नदशाधिष्ठात्मने तैजसपुरुषाय तैजसपुरुषात्मने हिरण्यगर्भाय हिरण्यगर्भात्मने तपिन्यादि-

क्षमान्त अर्थप्रद-द्वादशकलात्मक सूर्यमण्डलस्वरूपाय सूर्यमण्डलस्वरूपात्मने राजसात्मक-विष्णुग्रन्थि-विदलन-प्रवीणाय त्वगादि-पञ्चेन्द्रिय साक्षिणे कार्मिकमल-संशोधनाय वागुपार्जितकर्मब्रह्मणे कुण्डलिनी मध्यस्थान विद्योतमानाय टादि-नान्त वर्णस्थ-जरादि-दीर्घान्त दशज्येष्ठाकलात्म मणिपूरक-निवास स्थितिकृत्य ज्ञानशक्त्यात्मक लक्ष्मीनारायणस्वरूप जालन्धरपीठस्थ महावज्रेश्वरी षष्ठीशानन्दनाथाभ्यां स्वाहा

ओं ऐं ह्रीं श्रीं आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति
ब्रह्माहमस्मि योऽहमस्मि
ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा।।
कौलोपनिषद् पठनं

**तृतीय पात्र स्वीकरणं**

ओं ऐं ह्रीं श्रीं सर्वाम्नाय कलाकलापकलितं कौतूहलोद्योतकं इन्द्रोपेन्द्र
महेन्द्र शम्भु वरुण ब्रह्मादिभिः सेवितं।
ध्यातं देवगणैः परं मुनिगणैः मोक्षार्थिभिः सर्वदा वन्दे पात्रमहं
तृतीयमधुना स्वात्मावबोधक्षमं।
ओं ऐं ह्रीं श्रीं सकलह्रीं त्रिपुरादेवि विद्महे शक्तीश्वरि धीमहि
तन्नोऽमृता प्रचोदयात्।।
ओं ऐं ह्रीं श्रीं सौः सकलह्रीं त्वद्रूपिण्यैकरस्यत्वं कृत्वा ह्येतत् स्वरूपिणि।
भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु।।

ॐ सौः शक्त्याभिन्न प्रणवात्मने सुवः सुवस्स्वरूपाय सुवस्स्वरूपात्मने मं मकारस्वरूपाय मकारस्वरूपात्मने यं रं लं वं शं षं सं हं ळं क्षं दश-अन्तस्थ-ऊष्माखण्डस्वरूपाय दश-अन्तस्थ ऊष्माखण्डस्वरूपात्मने धियो यो नः प्रचोदयात् स नः पर्षददति दुर्गाणि विश्वा उर्वारुकमिव बन्धनात् तृतीयपादस्वरूपाय तृतीयपादस्वरूपात्मने सकलह्रीं शक्तिकूटस्वरूपाय शक्तिकूटस्वरूपात्मने शिव शक्ति सदाशिव ईश्वर शुद्धविद्यान्त पञ्चशिव

तत्त्वाधिपत्यात्मकाय शिवतत्त्वाधिपत्यात्मने कारणशरीराय कारणशरीरात्मने सुषुप्तिदशाधिष्ठात्मकाय सुषुप्ति दशाधिष्ठात्मने प्राज्ञपुरुषाय प्राज्ञपुरुषात्मने अव्याकृतपुरुषाय अव्याकृतपुरुषात्मने अमृतादि पूर्णामृतान्त कामप्रद षोडशकलात्मक सोममण्डलस्वरूपाय सोममण्डलस्वरूपात्मने तामसात्मक रुद्रग्रन्थि-विदलन-प्रवीणाय अन्तःकरण-चतुष्टय-साक्षिणे मायिकमल-संशोधनाय मोक्षोपार्जित-साक्षिब्रह्मणे कुण्डलिनी-शिखान्तर्द्योतमान-महाप्रकाशतेजसे पादि-शान्त-वर्णस्थ तीक्ष्णादि-मृत्यु- अन्तदश रौद्री कलात्म-अनाहत-निवास-संहारकृत्य क्रियाशक्त्यात्मक विद्याङ्कर स्वरूप पूर्णगिरि पीठस्थ महाभगमालिनी उड्डीशानन्दनाथाभ्यां स्वाहा

ओंऐंह्रींश्रीं आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योऽहमस्मि
ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा।।

त्रिपुरोपनिषद् पठनं

**चतुर्थ पात्र स्वीकरणं**

ओं ऐं ह्रीं श्रीं मद्यं मीन रसावहं हरिहरब्रह्मादिभिः पूरितं
मुद्रा मैथुन धर्म कर्म निरतं क्षाराम्लतिक्ताश्रयं।
आचार्याष्टकसिद्धभैरव-कला-मांसेन संशोधितं
पायात् पञ्चमकारतत्त्वसहितं पात्रं चतुर्थं नमः

४- कएईलह्रीं त्रिपुरसुन्दरि विद्महे हसकहलह्रीं पीठकामिनि धीमहि
सकलह्रीं तन्न क्लिन्ने प्रचोदयात्।।

४- ऐं कएईलह्रीं अखण्डैकरसानन्दकरे परसुधात्मनि।
स्वच्छन्दस्फुरणामत्र निधेहि कुलनायिके।।

४- क्लीं हसकहलह्रीं अकुलस्थामृताकारे शुद्धज्ञानकरेपरे।
अमृतत्त्व निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि।।

४- सौः सकलह्रीं त्वद्रूपिण्यैकरस्यत्वं कृत्वा ह्येतत् स्वरूपिणि।
भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु।।

४- ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि
अमृतं स्रावय स्रावय स्वाहा।।

ॐ ऐं क्लीं सौः वक्कामशक्त्याभिन्न प्रणवात्मने भूर्भुवस्सुवः भूर्भुवस्सुवस्स्वरूपाय भूर्भुवस्सुवस्स्वरूपात्मने ओं ओंकारस्वरूपाय ओंकारस्वरूपात्मने अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं अखण्डमातृकास्वरूपाय अखण्डमातृकास्वरूपात्मने तत्सवितुर्वरेण्यं जातवेदसे सुनवामसोमं त्र्यम्बकं यजामहे भर्गोदेवस्यधीमह्यारातियोनिदहातिवेद सुगन्धिं पुष्टिवर्धनं धियो यो नः प्रचोदयात् स नः पर्षददति दुर्गाणि विश्वा उर्वारुकमिव बन्धनात् परो रजसेसावदों नावेवसिन्धुं दुरितात्यग्निः मृत्योर्मुक्षीयमामृतात् तुरीयपादसहित पूर्णस्वरूपाय तुरीयपादसहित पूर्णस्वरूपात्मने कएईलह्रीं हसकहलह्रीं सकलह्रीं श्रीं चन्द्रकलाखण्ड विजृम्भित पूर्णस्वरूपाय पूर्णस्वरूपात्मने प्रकृत्यहंकारबुद्धिमनश्श्रोत्र त्वक् चक्षु जिह्वा घ्राण वाक् पाणि पाद पायु उपस्थ शब्द स्पर्श रूप रस गन्ध आकाश वायु वह्नि सलिल भूमि माया कला अविद्या राग काल नियति पुरुष शिव शक्ति सदाशिव ईश्वर शुद्धविद्यान्त षट्त्रिंशत्तत्त्वाधिपत्यात्मकाय षट्त्रिंशत्तत्त्वाधिपत्यात्मने सर्वशरीराय सर्वशरीरात्मने सर्वदशाधिष्ठात्मकाय सर्वदशाधिष्ठात्मने सर्वपुरुषात्मजीवाय सर्वपुरुषात्मजीवात्मने धूम्रार्चिपादि-पूर्णामृतान्त धर्म-अर्थ-कामप्रद अष्टत्रिंशत्कलात्मक अग्नि-सूर्य-सोम-मण्डलस्वरूपाय अग्नि-सूर्य-सोम-मण्डलस्वरूपात्मने सत्व-राजस-तामसात्मक ब्रह्म-विष्णु-रुद्रग्रन्थि-विदलनप्रवीणाय सर्वप्रपञ्चसाक्षिणे आणव-कार्मिक-मायिकात्म-सर्वमल-संशोधनाय सर्वसाधनोपार्जित-शुद्धब्रह्मणे सर्वकुण्डलिनी द्योतमान तेजसे षादि- ळान्तवर्णस्थ पीतादि-असितान्त चतुःशान्ताकलात्म विशुद्धिनिवास-तिरोधानकृत्य अम्बिकाशक्त्यात्मक महेशी-ईश्वरस्वरूप श्रीमहोड्याणपीठस्थ महाश्रीसुन्दरी महाश्रीसुन्दराभ्यां स्वाहा

४- आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा।।

भावनोपनिषद् पठनं

**पञ्चम पात्रं:**

४-आधारे भुजगादिराजवलये पात्रं महीमण्डलं
मद्यं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग् दन्तिनः
सोऽहं भैरवमर्चयन् प्रतिदिनं तारागणैः रक्षितः
आदित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किंकरैः।।

४- ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय क्लेदय
महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु ह्सौं स्हौः

४- सर्वप्रणवातीताय सर्वलोकातीताय बिन्द्वातीताय सर्ववर्णातीताय सर्वपादातीताय सर्वकूटातीताय सर्वतत्त्वातीताय सर्वशरीरातीताय सर्वावस्थातीताय सर्वाण्डातीताय सर्वकारणातीताय अक्षरातीताय सर्वमण्डलातीताय सर्वप्रपञ्चातीताय सर्वग्रन्थ्यातीताय सर्वमलातीताय सर्वसाधनातीताय सर्वकुण्डलिनी प्रकाशमान-महातेजसे वर्णादि-विसर्गान्तवर्णस्थ निवृत्यादि-व्योमरूपान्त षोडश शान्त्यतीतकलात्म आज्ञानिवास अनुग्रहकृत्य शान्त्यतीतशक्त्यात्मक परशिवा सदाशिव स्वरूप शाम्भवपीठस्थ श्रीललितामहात्रिपुरसुन्दरी श्रीचर्यानन्दनाथाभ्यां स्वाहा

४- आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा।।

**षष्ठ पात्रं:**

४- रुद्रं चामर भद्र पीठ परमानन्दोदितं दीपनं वामां राज्यमनोरमां
शुभकरं सायुज्यसाम्राज्यदं।

नानाव्याधि भवान्तकूपहरणं जन्मान्तरं नाशनं श्रीमत्सुन्दरि तर्पण

द्रवरसं पात्रं च षष्ठं भजे।।

४- आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्धेवखल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणीविद्या परमे व्योमन्। य एवं वेद प्रतितिष्ठति अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या।।

४- श्रीविद्यां परिपूर्णमेरु शिखरे बिन्दु त्रिकोणोज्ज्वले

वागीशीश रमेश रुद्र चरणमञ्चे शिवाकारके।

कामाक्षीं करुणारसाम्बु निलयां कामेश्वराङ्कस्थितां

कान्तां चिन्मय कामकोटि निलयां श्री ब्रह्मविद्यां भजे।।

४- (महाषोडशी) पाशाङ्कुशेक्षुपुष्पबाणधराभ्यां उद्यद्भानुसहस्राभाभ्यां पञ्चब्रह्ममय मञ्चाधिष्ठिताभ्यां परस्पराश्लिष्टवपुर्धराभ्यां नवयौवनाभ्यां चन्द्ररेखाविभूषिताभ्यां सहस्रार-कमलकर्णिकान्तरस्थाभ्यां परशाम्भवपीठस्थ श्रीललितामहात्रिपुरसुन्दरी-पराभट्टारिका सहित श्रीशिवकामेश महाभट्टारकरूपाभ्यां श्रीअमुकाम्बा सहित श्रीअमुकानन्दनाथ श्रीगुरुपादुकां पूजयामि नमः स्वाहा।।

४- आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा।।

**सप्तम पात्रं (पूर्ण पात्रं):**

४- पूर्णाश्रीभुवनेश्वरी भगवती श्रीराजराजेश्वरी

पूर्णाभैरवभैरवी च वटुका पूर्णा सदाकालिका।

पूर्णा श्रीबगळा च धूम्रवदना श्रीछिन्नमस्ताम्बिका

पूर्णाश्रीगुरुपादुकामृतरसं श्रीपूर्णपात्रं भजे।।

४- ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणाहुतं।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना।।

४- पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्युते पूर्णस्यपूर्णमादाय
पूर्णमेववशिष्यते

४- इतःपूर्वं इतः परं प्राण बुद्धि देह धर्माधिकारतः जाग्रत् स्वप्न सुषुप्ति तुर्य तुर्यातीतावस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यां उदरेण शिश्ना यत् स्मृतं यत् कृतं तत सर्वं ब्रह्मार्पणं भवतु स्वाहा

४-स्वप्रकाशमूर्तिरेकिका तद्विमर्शमूर्तिरेकिका तयो
सामरस्यवपुरिष्यते परा-पादुकापरशिवात्मनो गुरु।।

४- ऐं क्लीं सौः।श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं।कएईलह्रीं हसकहलह्रीं सकलह्रीं। कएईलहसकहलसकलह्रीं।हसकलह्रीं हसकहलह्रीं सकलह्रीं। हसकलहसकहलसकलह्रीं। श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं।ह्रीं श्रीं ह्स्ख्फ्रें ह्सौः हसक्षमलवरयूं स्हौः सहक्षमलवरयीं ह्सौः स्हौः श्रीं प्रज्ञानं ब्रह्म ह्रीं अहं ब्रह्मास्मि क्लीं तत्त्वमसि श्रीं ह्रीं क्लीं अयमात्मा ब्रह्म हंसः शिवः सोहं स्वरूपनिरूपणहेतवे स्वच्छ प्रकाश परापर महाप्रकाश विमर्श पूर्णाहन्तात्मक पराभट्टारिकाम्बालिङ्गित परिपूर्णानन्दनाथ श्रीमहापादुकां पूजयामि नमः स्वाहा।

४- आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा।।

# ॥ दशमः खण्डः ॥

## पूजासमर्पण–देवतोद्वासने

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया।
तत्सर्वं कृपया देवि गृहाणाराधनं मम॥
देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु॥

(इति देव्या वामहस्ते पूजां समर्प्य, शङ्खमुद्धृत्य, देव्युपरि त्रिः परिभ्राम्य, तज्जलं हस्ते समादाय, सामयिकानात्मानं च मूलेन प्रोक्ष्य शङ्खं प्रक्षाल्य निदध्यात् ।)

***Puja Samarpana:*** *Offer the act of worship at the feet of Mother mentally and pour little water into the left hand of Mother. Gently lift the conch and rotate it thrice above the Mother and pour the water from the conch into the right palm and sprinkle it upon oneself and all the assembled devotees chanting the Mulamantra. He should wipe his eyes with the water. Clean the conch and place it back on the Adharapatra.*

(ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य–)

*Take a flower offered at the Mother's feet and reverentially sip the water used to bathe her as Tirtha.*

ओं ऐं ह्रीं श्रीं ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं शिवे।
तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि॥

(इति क्षमाप्य सर्वासामामावरणदेवतानां श्रीदेव्यङ्गे विलयं विभाव्य खेचरीं बद्ध्वा)–

*Visualize all the Avaranadevatas to merge into the Mother and show the Kecharimudra while chanting the Mantra and seek Her forgiveness*

*for any lapses. With the hands in Samhara mudra pick up one more flower from the Mother and visualize Her merging into oneself.*



ओं ऐं ह्रीं श्रीं हृत्पद्मकर्णिकामध्ये
शिवेन सह शङ्करि।
प्रविश त्वं महादेवि सर्वैरावरणैः सह।।

(इति तेजोरूपेण परिणतां श्रीदेवीं पूर्ववत् हृदयं नीत्वा तत्र च मूर्तिं पञ्चोपचारैः संपूज्य पुनः आत्माभिन्नसंविद्रूपेण भावयेत् ।।)

*Mentally offer the Panchopachara with respective Mudras.*

## ।। एकादशः खण्डः।।

*Chant the following mantras which pray for Mother's benign grace upon the entire creation.*

### शान्तिस्तव–विशेषार्घ्योद्वासने

### शान्तिस्तव

ओं ऐं ह्रीं श्रीं संपूजकानां परिपालकानां
यतेन्द्रियाणां च तपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञां
करोतु शान्तिं भगवान् कुलेशः।।

नन्दन्तु साधककुलान्यणिमादिसिद्धाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।

सा शाम्भवी स्फुरतु कापि ममाप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ।।

शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादि शिवान्तं च जगद्यज्ञेन तृप्यतु।।

## विशेषार्घ्योद्वासनम्

(मूलेन विशेषार्घ्यपात्रं आमस्तकमुद्धृत्य तत्क्षीरं पात्रान्तरेणादाय आर्द्रं ज्वलति इति मन्त्रेण आत्मनः कुण्डिलिन्यग्नौ हुत्वा ब्राह्मणान् सुवासिनीश्च भोजयित्वा स्वयमपि भुक्त्वा यथासुखं विहरेत् ।।)

*Lift the vishesharghya patra while chanting the Mulamantra until one's forehead and pour out the remaining Vishesharghya into one's Atmapatra. Place the Vishesharghya cup back in it's Adharapatra. Chant the Mantra "Ardram Jvalati..." and drink the Vishesharghya from one's Atmapatra visualizing it as an offering into the fire of consciousness blazing in one's Kundalini.*

*One should feed as many devotees and Suvasinis as possible and then partake the Prasada.*

।। इति शिवम् ।।



# ॥ परिशिष्टकम् ॥

## होमः

*Performance of Homa is not mandatory, but will add more value to the puja performed.*

पूजामण्टपस्य ईशानभागे चतुरश्राकारं हस्तायामङ्गुष्ठोन्नतं स्थण्डिलं परिकल्प्य मूलेन निरीक्ष्य, फट्, इति सामान्यार्घ्योदकेन प्रोक्ष्य कुशेन ताडयित्वा, हुं इत्यवकुण्ठ्य स्थण्डिलोपरि मध्यम दक्षिणोत्तरेषु क्रमेण प्रागग्रास्तिस्त्रो रेखा विलिख्य तदुपरि मध्यमपश्चिमपूर्वेषु उदगग्रास्तिस्त्रोर रेखा विलिख्य, तासु रेखासु उल्लेखक्रमेण–

*On the N.W side of the Puja house, place the homa kunda slightly raised 3 inches above the ground level. Gaze at the homakunda while chanting the Mulamantra, sprinkle a little water from the conch (Samanyarghya) while chanting "Phat". Touch the kunda with the tips of the Darbha grass-bundle. While chanting "Hum", show the Avakunthana mudra.*

*Draw three lines emerging from east towards west and another set of three lines emerging from north. Now worship these six lines with the following mantras:*

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः(७) ब्रह्मणे नमः। ७ यमाय नमः । ७ सोमाय नमः। ७ रुद्राय नमः। ७ विष्णवे नमः। ७ इन्द्राय नमः। इत्यभ्यर्चयेत् ॥

ततः स्वदेहे षडङ्गन्यासं कुर्यात् । यथा–

*Now perform the nyasa on one's body with using the following mantras:*

७ सहस्रार्चिषे हृदयाय नमः। ७ स्वस्तिपूर्णाय शिरसे स्वाहा । ७ उत्तिष्ठपुरुषाय शिखायै वषट् । ७ धूमव्यापिने कवचाय हुं।

७ सप्तजिह्वाय नेत्रत्रयाय वौषट् । ७ धनुर्धराय अस्त्राय फट् ।
अनेनैव षडङ्गेन अग्नीशासुरवायुकोणेषु मध्ये दिक्षु
स्थण्डिलमभ्यर्च्य

*Using the same six mantras worship the Homakunda in the designated places.*

तत्र अष्टकोणषट्कोण त्रिकोणात्मकमग्निचक्रं प्रवेशरीत्या
विलिख्य त्रिकोणे दिगष्टकं विभाव्य तत्र स्वाग्रादिप्रादक्षिण्येन
दिक्षु मध्ये च क्रमात् –

*Draw the Agnichakra as shown and worship the 8 outer triangles and lastly the innermost triangle using the following mantras.*



७ पीतायै नमः। ७ श्वेतायै नमः।
७ अरुणायै नमः। ७ कृष्णायै नमः।
७ धूम्रायै नमः । ७ तीव्रायै नमः।
७ स्फुलिङ्गिन्यै नमः। ७ रुचिरायै नमः।
७ ज्वालिन्यै नमः इति पीठशक्तीः समर्चयेत् ।।

*Now worship the 6 inner triangles and lastly the innermost triangle using the following mantras.*

ततः पीठमध्ये– ७ तं तमसे नमः । ७ रं रजसे नमः। ७ सं
सत्वाय नमः। ७ आं आत्मने नमः। ७ अं अन्तरात्मने नमः।
७ पं परमात्मने नमः। ७ ह्रीं ज्ञानात्मने नमः। इति पूजयेत् ।।

ततः त्रिकोणे–७ ओं ह्रीं वागीश्वरीवागीश्वराभ्यां नमः–
इति मन्त्रेण जनिष्यमाणस्य वह्नेः पितरौ वागीश्वरीवागीश्वरौ
संपूज्य तयोर्मिथुनीभावं भावयित्वा, अरणेः सूर्यकान्ताद्वा

वह्निमुत्पाद्य द्विजगृहाद्वा आनीय मृत्पात्रे ताम्रपात्रे वा अग्निं स्थण्डिलाद्बहिः आग्नेय्यां ऐशान्यां नैर्ऋत्यां वा दिशि निधाय, तस्मात्क्रव्यादांशमेकमग्निशकलं फट् इति अस्त्रमन्त्रेण नैर्ऋत्यां निरस्य अग्निं मूलेन निरीक्ष्य प्रोक्ष्य च, अस्त्रेण कुशैस्ताडयित्वा, कवचेनावकुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, ततः ७ ओं रं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मूलाधारोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गमय्य तं वागीश्वर बीजस्य वागीश्वरीयोन्यां प्रवेशबुद्ध्या बाह्याग्नौ संयोजयेत् ।।

*Then worship the innermost triangle and invoke Vageeshvara and Vageeshvari, who would beget the sacred fire to be used for Homa. Now using embers, or using concentrated Sunlight through a lens, or from the house of a brahmin generate fire and placing it on a copper or bronze plate, keep it to the NW/SW/SE of the homakunda. Remove a small burning ember from the plate and discard it in the SE direction while chanting "Phat". Gaze the sacred fire while chanting the Mulamantra, and sprinkle a little water.*

*Chanting "Om Hrahaha" touch the fire with the tip of darbha, while chanting "Hum", show the Avakunthana mudra. Show Dhenu and Yoni mudras.*

*Then chanting the following mantra, imagine the fire of consciousness as emerging from one's muladhara and exiting through one's forehead. Now imagine the same to merge into the fire placed outside within the womb of Vageeshvari.*

ततः ७ कवचाय हुं इति मन्त्रेण इन्धनैराच्छाद्य ७ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्।। इत्युपस्थाय। ७ उत्तिष्ठ पुरुष हरित–पिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा इति वह्निमुत्थाप्य ततः ओं ह्रीं इति स्थण्डिलोपरि अग्निं त्रिवारं भ्रामयित्वा स्थण्डिले स्थापयेत् ।

७ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा इति प्रज्वाल्य, ज्वालिनीमुद्रां प्रदर्श्य, (प्राक्तोयं निधाय), वागीश्वरीगर्भे धृतं ध्यात्वा ७ ऐं नमः अथ होमाग्नेः गर्भधानकर्म, पुंसवनकर्म, सीमन्तोन्नयनकर्म, जातकर्म, ललिताग्निरिति नाम्ना नामकरणकर्म कल्पयामि नमः, ७ ऐं नमः अस्य ललिताग्नेः अन्नप्राशनकर्म, चौलकर्म, उपनयनकर्म, गोदानकर्म, विवाहकर्म कल्पयामि नमः – तत्तत्कर्मभावनया अक्षतैरभ्यर्चयेत् ।।

*While chanting "Kavachaya Hum", cover the fire with the some dry twigs, and chant the following mantra while standing.*

*Now chant the mantra and lift the plate having the fire and twigs, circumambulate it thrice above the homakunda and then place the fire within the homakunda.*

*Chant the following mantra and show "Jvaalini mudra" and add some more sticks to it.*

*Place a cup of water to the East of the homakunda.*

*Now imagine the fire to be inside the womb of Vagishvari, and mentally perform the sacred rituals of Garbhadhana etc. for every sacrement, offer akshata.*

ततः सामान्यार्घ्योदकेनाग्निं मूलेन परिषिच्य अग्निमलंकृत्य

*Using the Samanyarghya, sprinkle water all around the homakunda while chanting the mulamantra. Now decorate the eight cardinal directions around the homakunda with akshata and flowers.*

प्रागग्रैरुदगग्रैश्च कुशैः परिस्तीर्य उत्तरतो दर्भनास्तीर्य दर्वीं आज्यस्थालीं प्रोक्षणीं प्रणीतां इतरदर्वीं इध्मं च द्वन्द्वन्यश्चि (अघोबिलं) पात्राणि सादयित्वा द्वौ दर्भौ प्रादेशमत्रे पवित्रे कृत्वा अद्भिरनुमृज्य, सामान्यार्घ्योदकेन षट् पात्राणि प्रोक्ष्य, प्रोक्षणीपात्र-मादाय पुरतो निधाय, अक्षतैः सह सामान्यार्घ्योदकेन पूरयित्वा,

हस्तयोः अङ्गुष्ठोपकनिष्ठिकाभ्या –मुदगप्रागभ्यां पवित्राभ्यां मूलेन त्रिः प्रागुत्पूय, मूलेन सप्तधा अभिमन्त्र्य, उत्तानानि पात्राणि कृत्वा, इध्मं विस्रस्य त्रिः प्रोक्ष्य, प्रोक्षणीपात्रं दक्षिणतो निधाय, प्रणीतापात्रमादाय पुरतो निधाय, पवित्रे तस्मिन्निधाय, अक्षतैः सह अङ्कुशमुद्रया मूलेन सामान्यार्घ्योदकेन पूरयित्वा,पूर्ववदुत्पूय घ्राणसममुद्धृत्य पात्रासादानादुत्तरतो दर्भेषु सादयित्वा, वरुणाय नमः इति गन्धपुष्पाक्षतैरभ्यर्च्य दर्भैः प्रच्छाद्य,

## paristaranam

1. *The Arrangement of a protective Boundary created around the Vedi with blades of Nuni Darbha is called "paristaranam".*
2. *On the East of the Vedi, place a bunch of sixteen (16) blades of Nuni darbha their tips facing the North.*
3. *On the South of the Vedi, place a bunch of sixteen (16) blades of Nuni darbha their tips facing the East.*
4. *On the West of the Vedi, place a bunch of sixteen (16) blades of Nuni darbha their tips facing the North.*
5. *On the North of the Vedi, place a bunch of sixteen (16) blades of Nuni darbha their tips facing the East.*
6. *The Darbhas in the South should be so placed that they lay on the top of the blunt bottom ends of Darbhas placed in the East & West.*

6(a) *The Darbhas placed on the East and the West should be so placed that their tip (Nuni) lay on the tip blunt end of the darbha placed on the North.*

7. *The above Boundary created on the four sides of the Vedi is called the* ***Paristarana.***
8. *A little away from the Paristaranam Darbhas placed in the North place two bunches containing 6 blades of Darbhas each with their tips facing the East, leaving a little distance in between them, This is called as* ***"Paatra saadhana"***

9. *On these Darbhas place the following six items in an inverted position in the order given below beginning from the West end. (a) Darvi (one long wooden spoon/ big Parasa leaf) (b) Aajya-sthaalee (Cup for ghee); (c)Prokshanee Paatra(a cup for prokshana); (d)Praneeta Paatra( a cup for water); (e) Itara Darvi (a small wooden spoon(ladle) (f) Idhma (21 Samidha sticks tied together with a Darbha rope).*
10. *A little away from the Paristarana on the west of the Vedi, place a set of 6 Nuni Darbhas with their tips facing the North.*
11. *On the North of the Vedi, in between the Paristarana and the Patrasadhana place another set of 12 Nuni Darbhas with their tips facing the East for placing the Praneeta Patra on it later.*
12. *On the South of the Vedi, place a set of 4 Nuni darbhas with their tips facing the East for seating Brahma .*
13. *Prepare a Pavitra with two* ***"aayaamata Darbha"*** *( A nuni Darbha of a shorter length). Touch all the utensils to be used in the Homa (kept inverted on the Patra Saadhana) with the Ayamata Darbha Pavitra.*
14. *Keep the Prokshanee Patra on the set of Darbhas placed in front, on the West of the Vedi. Keep the Ayaamata Darbha Pavitra with its tip facing the North on the prokshanee Patra.*
15. *Drop a few grains of Akshata in the Prokshanee patra and fill it to quarter level with water.*
16. *Holding the two ends of ayaamata Darbha Pavitra with the thumb and ring finger of both the hands push the water in the Prokshanee Patra from West towards East three times.*
17. *Upturn all the Patras(homa utencils which were till now kept inverted) and keep them on the patrasthana in the same order as before.*
18. *Open the knot of the rope tied on the Idhma.*
19. *Dip the tip of the Ayamata Darbha Pavitra in the water in the Prokshanee Patra and sprinkle it on all the homa utencils and samidha sticks.*

20. *Keep the Prokshanee Patra on the South.*

21. *Take the Praneeta patra (kept in the North ) and keep it on the darbha in the West(in front)*

22. *Drop a few grains of Akshata in the Praneeta Patra and fill it to quarter level with water.*

23. *Holding the two ends of Ayaamata Darbha with the thumb and ring finger of both the hands push the water in the praneeta Patra from West towards East three times.*

24. *Lift the Praneeta patra to nose level then keep it on the Nuni Darbha placed on the North meant for the Praneeta and even as chanting* वरुणाय नमः सकलाराधनै स्वर्चितम् *" sprinkle a few akshata grains and a few blades of katta darbha on it.*

पवित्रे आज्यपात्रे निधाय, अग्नेः दक्षिणतो ब्रह्माणं दर्भेषु निषाद्य, अस्मिन् श्रीललिताहोमकर्मणि ब्रह्माणं त्वां वृणे। ओं ब्रह्मणे नमः सकलाराधनैः स्वर्चितम् । अपरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यां आज्यं निरुप्य उदीचोऽङ्गारान्निरूह्य तेषुर्हितायामाज्यस्थाल्यां आज्यं निरुप्य उदीचोऽङ्गारान्निरूह्य तेषु आज्यमधिश्रित्य ज्वलता तृणेनावद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य त्रिः पर्यग्निकृत्वा उदगुद्वास्य अङ्गारान्प्रत्यूह्य आज्यस्थालीं स्वपुरतो निधाय मूलेन सप्तवारमभिमन्त्र्य ईक्षणप्रोक्षण ताडनावकुण्ठनानि कृत्वा उदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रग्रन्थिं विस्रस्य अप उपस्पृश्य प्रागग्रं अग्नौ प्रहरति। अथ दर्व्यौ अग्नौ प्रतितप्य दर्भैः संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भान् अद्भिः संस्पृश्य अग्नौ प्रहरति।।

## Aajya samskaara

1. *The Process of purification of the Ghee to be used for the homa is called the* **Aajya samskaara.**

2. *Take the ajya patra kept on the north of the Vedi, and keep it on the darbha in front of the performer placed on the west.*

2(*a*). *Keep the Ayamata Pavitra on the vessel containing ghee as show it above the vedi. So that it melts*

3. *Pour melted Ghee into the Ajya Patra.*

4. *Keep a piece of a dry cow dung cake on the left side away from and outside the Paristrana.*

5. *Remove three embers fire from the North end inside the Vedi and place it on the Cow dung cake piece. Keep the Ajya Patra on it.*

6. *Burn the tip of a Nuni Darbha in the fire and as it burns, rotate it (circumambulate) above the Ajya Patra and then discard the Darbha on the North.*

7. *Cut the tip of two Nuni Darbhas , dip them in water and drop them into the Ajya patra.*

8. *Again burn the tip of a Nuni Darbha in the fire and as it burns, rotate it (circumambulate) it above the Ajya Patra and then discard the Darbha on the North.*

9. *Remove the Ajya Patra from the cow dung cake and keep it in the North. Put the embers into the Vedi.*

10. *Keep the Ajya Patra in front in the West and place the Ayamata Darbha on it with its tip facing the North.*

11. *Holding the two ends of Ayamata Darbha with the thumb and ring finger of both the hands push the ghee in the Ajya Patra from East towards West again East three times.*

12. *Untie the knot of the Ayamata, wash the hands and drop the darbha into the fire in to Vedi with,its tip facing the East.*

इध्ममादाय परिधीन् परिदधाति–स्थूलं उदगग्रं पश्चात्, अणीयांसं दीर्घं प्रागग्रं दक्षिणतः, अणिष्ठं ह्रसिष्टं प्रागग्रं उत्तरतः अग्नि परिस्तरणयोर्मध्ये अन्योन्यसंस्पृष्टान् निधाय, मध्यमं परिधिं दक्षिणहस्तेनोपस्पृश्य अग्नेः दक्षिणपूर्व–उत्तरपूर्वदेशयोः आधारसमिधौ निधाय अथाग्निं परिषिञ्चति–अदितेऽनुमन्यस्व, अनुमतेऽनुमन्यस्व,

सरस्वतेऽनुमन्यस्व, देव सवितः प्रसुव इति परिषिच्य अग्निमलंकृत्य इध्ममादाय द्विरभिधार्य मूलमध्ययोः मध्यं मृगीमुद्रया गृहीत्वा अस्मिन् श्रीललिताहोमकर्मणि ब्रह्मन् इध्ममाधास्ये ओं आधत्स्व इत्यनुज्ञातः हस्ताभ्यां इध्मं आदधाति। स्रुवेण आज्यमादाय तूष्णीं आधारावाधारयति। यथा–

## Darvee Samskaara

1. *The rite to purify the Darvee(wooden ladles or mango leaves) is called the* ***Darvee samskaara.***
2. *Hold the two darvees in both hands , show their front sides on the fire in the Vedi and hold them in the left hand.*
3. *Take three darbhas in your right hand and move it over the darvees as if sweeping them.*
4. *Once again show the Darvees on the fire in the Vedi.*
5. *Sprinkle water thrice on them (prokshanam)and place them on the north of the Ajya Patra.,*
6. *Dip the tip of the three darbhas in water and drop them into the fire in the Vedi.*
7. *Place a stout Samidha stick in the vedi on the West of the Homa-kunda, a long Samidha in the South and a thin Samidha on the North such that all the Samidha(one in the North and the one in the South ) touch the long samidha on the West.*
8. *Touch the samidha placed on the West.*
9. *Thrust two samidha sticks* ***(termed as aahaara samidha)*** *in the fire in the Vedi One from South East corner and the other from the North East corner of the Vedi.*

# Agni parishechanam

1. *Hold water in closed palm of your right hand, thumb facing upwards and let it fall through the little finger on the South from West to East as you chant* अदितेऽनुमन्यस्व .
2. *Similarly hold water in closed palm of your right hand, thumb facing upwards and let it fall through the little finger in the West from South to North as you chant* अनुमतेऽनुमन्यस्व.
3. *Similarly hold water in closed palm of your right hand, thumb facing upwards and let it fall through the little finger in the North from South west to East as you chant* सरस्वतेऽनुमन्यस्व .
4. *Then chanting* देव सवितः प्रसुव *circum-ambulate beginning from North East corner around the Vedi and ending once again in North East corner, letting the water fall through the tiny finger. Take care that when this is done, water does not fall in the Vedi.*
5. *Take a few samidha sticks, dip them in ghee and chanting* अस्मिन् ललिताहोमकर्मणि ब्रह्मन् इध्ममाधास्ये। *drop them in to the fire in the Vedi, looking at the priest representing Brahma.*
6. *The priest should say* ओं आधत्स्व -

(इतरदर्व्या) वायव्यादाग्नेयान्तं स्वाहा। प्रजापतय इदं न मम। (प्रधानदर्व्या) नैर्ऋत्यादीशानान्तं स्वाहा। इन्द्रायेदं न मम। (उत्तरार्धपूर्वार्धे) अग्नये स्वाहा। अग्नय इदं। (दक्षिणार्धपूर्वार्धे) सोमाय स्वाहा। सोमायेदम्। (समं पूर्वेण मध्ये) अग्नये स्वाहा। अग्नय इदम्।। आरम्भप्रभृति एतत्क्षणपर्यन्तं मध्ये संभावितसमस्त दोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि। ओं भूर्भुवःसुवः स्वाहा। प्रजापतय इदम् ।

7. *Using the smaller Darvi pour the ghee into the fire in the Vedi from North West to South East direction meditating on Prajapati chanting* ओं स्वाहा, प्रजापतये इदं न मम
8. *Using the bigger Darvi pour the ghee into the fire in the Vedi circum-ambulate begining from South West direction, then chant* इन्द्राय स्वाहा इन्द्राय इदं न मम

9. *Again using the bigger Darvi pour the ghee into the fire in the Vedi in the Southern side, chanting* अग्नये स्वाहा *then chant* अग्नये इदं न मम

10. *Again using the bigger Darvi pour the ghee into the fire in the Vedi in the Southern side chanting,* सोमाय स्वाहा *then chant* सोमाय इदं न मम

11. *Again using the bigger darvi pour the ghee into the fire in the centre of the Vedi chanting,* अग्नये स्वाहा *then chant* अग्नये इदं न मम

12. *Again using the bigger darvi pour the ghee into the fire in the centre of the Vedi chanting*

आरम्भप्रभृति एतत्क्षणपर्यन्तं मध्ये संभावित समस्तदोष प्रायश्चित्तार्थं सर्वप्रायश्चित्ताहुतिं होष्यामि- ओं भूर्भुवस्सुवस्स्वाहा

13. *Having chanted* प्रजापतय इदं न मम

अथाग्निं ध्यायेत् - *meditate upon agni.*

त्रिणयनमरुणप्ताबद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिं स्वस्तिकाभीतिहस्तं
नमत कनकमालालंकृतांसं कृशानुम् ।।

(शारदातिलके -वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु।।)

अथ अष्टकोणे स्वाग्रादिप्रादक्षिण्येन-

*Imagine the Agnichakra drawn earlier and as shown and worship the 8 outer triangles and lastly the innermost triangle using the following mantras.*

७, जातवेदसे नमः, ७ सप्तजिह्वाय नमः । ७ हव्यवाहनाय नमः। ७ अश्वोदराय नमः। ७ वैश्वानराय नमः। ७ कौमारतेजसे नमः, ७ विश्वमुखाय नमः। ७ देवमुखाय नमः। इत्यभिपूज्य।।

षट्कोणे षडङ्गं यथा–

*Now worship the 6 inner triangles and lastly the innermost triangle using the following mantras.*

७ सहस्रार्चिषे हृदयाय नमः। ७ स्वस्तिपूर्णाय शिरसे स्वाहा।
७ उत्तिष्ठपुरुषाय शिखायै वषट् । ७ धूमव्यापिने कवचाय हुं।
७ सप्तजिह्वाय नेत्रत्रयाय वौषट् । ७ धनुर्धराय अस्त्राय फट् ।
इत्यभ्यर्च्य। त्रिकोणे–

*Then worship the innermost triangle*

७ ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मन्त्रेण अग्निं पुष्पाक्षतैरर्चयेत् ।
अथ अग्नेः सप्तजिह्वासु एकैकां आज्याहुतिं कुर्यात् ।
यथा–*(Offer ghee using the smaller laddle for the seven tongues of agni.*

७ हिरण्यायै नमः स्वाहा–हिरण्याया इदं न मम (ऐशान्यां)
७ कनकायै नमः कनकाया इदं न मम (प्राच्यां)
७ रक्तायै नमः रक्ताया इदं न मम (आग्नेय्यां)
७ कृष्णायै नमः कृष्णाया इदं न मम (नैर्ऋत्यां)
७ सुप्रभायै नमः सुप्रभाया इदं न मम (पश्चिमायां)
७ अतिरक्तायै नमः अतिरक्ताया इदं न मम (वायव्यायां)
७ बहुरूपायै नमः बहुरूपाया इदं न मम (मध्ये)
ततस्तिस्र आहुतीर्जुहुयात् । यथा–

*Offer ghee thrice using the smaller laddle.*

७ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा–अग्नय इदम् । ७ उत्तिष्ठपुरुष हरितपिङ्गल लोहिताक्ष

सर्वकर्माणि साधय मे देहि दापय स्वाहा–अग्नय इदम् ।
७ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वहा–अग्नय इदम् । अथ अग्नेर्मध्यभागे स्थितायां दक्षिणोत्तरायतायां बहुरूपाख्यजिह्वायां, ओं ऐं ह्रीं श्रीं ह्स्त्रैं ह्स्कल्रीं हस्रौः। महापद्मवनान्तस्थे कारणानन्दविग्रहे। सर्वभूतहिते मातरेह्येहि परमेश्वरि।। इति श्रीदेवीमावाह्य उपचारमन्त्रैः गन्धादीन् पञ्चोपचारानाचर्य पूजाक्रमेण जुहुयात् ।

*Invoke Mother Lalita into the fire and offer mentally sandle etc., using panchopachara mudras. And offer ghee chanting the mantras as per the puja order.*

यथा–

४ गणपतिमूलं महागणपतये स्वाहा (त्रिः *Thirce*)।।
४ मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा(दशकृत्वः)।।

*(Ten times)*

क–५, हृदयाय नमः हृदयदेव्यै, ह–६ शिरसे स्वाहा शिरोदेव्यै– स–४ शिखायै वषट् शिखादेव्यै–, क–५ कवचाय हुं कवचदेव्यै–, ह–६ नेत्रत्रयाय वौषट् नेत्रदेव्यै, स–४ अस्त्राय फट् अस्त्रदेव्यै स्वाहा।।

अः क–१४ अः ललितामहानित्यायै (त्रिः) *(Thrice)*

तत्तिथिनित्यामन्त्रेण तत्तिथिनित्यायै, अः क १५ अः ललितामहानित्यायै स्वाहा।।

४ अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्यायै स्वाहा ।।

४ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये

भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसात्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हब्लें ह्रीं आं भगमालिनीनित्यायै स्वाहा।।

४ इं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्यायै

४ ईं ओं क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्यायै ।।

४ उं ओं ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्यायै स्वाहा।।

४ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्यायै।।

४ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्यायै स्वाहा।।

४ ॠं ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं
त्वरितानित्यायै स्वाहाः।।

४ लृं ऐं क्लीं सौः लृं कुलसुन्दरीनित्यायै स्वाहा।।

४ ॡं ह्स्क्लरड्रैं ह्स्क्लर्डीं ह्स्क्लर्डौः
ॡं नित्यानित्यायै स्वाहा।।

४ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं
नीलपताकानित्यायै स्वाहाः।।

४ ऐं भम्र्यूं ऐं विजयानित्यायै स्वाहा।।

४ ओं स्वौं ओं सर्वमङ्गलानित्यायै स्वाहाः।।

४ औं ओं नमो भगवति ज्वालामालिनि देवदेवि
सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल
प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र ज्वालामालिनि
हुं फट् स्वाहा औं

ज्वालामालिनीनित्यायै स्वाहा:।।

ओं ऐं ह्लीं श्रीं अं चक्रौं अं चित्रानित्यायै स्वाहा:।।

ओं ऐं ह्लीं श्रीं अः पञ्चदशी अः ललितामहानित्यायै स्वाहा:।।

ओं ऐं ह्लीं श्रीं ऐं ग्लौं ह्स्ख्फ्रेंहसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः श्रीविद्यानन्दनाथात्मकचर्यानन्दनाथ स्वाहा, उड्डीशानन्द नाथाय स्वाहा, प्रकाशानन्दनाथाय स्वाहा, विमर्शानन्द नाथाय स्वाहा, आनन्दानन्दनाथाय स्वाहा, षष्ठीशानन्दनाथाय स्वाहा, ज्ञानानन्दनाथाय स्वाहा, सत्यानन्दनाथाय स्वाहा, पूर्णानन्द नाथाय स्वाहा, मित्रेशानन्दनाथ स्वाहा,स्वभावानन्दनाथाय स्वाहा, प्रतिभानन्दनाथाय स्वाहा, सुभगानन्दनाथाय स्वाहा।।

ओं ऐं ह्लीं श्रीं परप्रकाशानन्दनाथाय स्वाहा, परशिवानन्दनाथाय स्वाहा, कौलेश्वरानन्दनाथाय स्वाहा, शुक्लदेव्यम्बायै स्वाहा, कुलेश्वरानन्दनाथाय स्वाहा, कामेश्वर्यम्बायै स्वाहा, भोगानन्दनाथाय स्वाहा, क्लिन्नानन्दनाथाय स्वाहा, समयानन्दनाथाय स्वाहा, सहजानन्दनाथाय स्वाहा, गगनानन्द नाथाय स्वाहा, विश्वानन्दनाथाय स्वाहा, विमलानन्दनाथाय स्वाहा, मदनानन्दनाथाय स्वाहा, भुवनानन्द नाथाय स्वाहा, लीलाम्बायैस्वाहा, स्वात्मानन्दनाथाय स्वाहा,प्रियानन्दनाथाय स्वाहा, (परमेष्ठिगुरु)अमुकानन्दनाथाय स्वाहा, (परमगुरु) अमुकानन्दनाथाय स्वाहा, (स्वगुरु)अमुकानन्दनाथाय स्वाहा।।

ओं ऐं ह्लीं श्रीं अं आं सौः त्रैलोक्यमोहनचक्राय स्वाहा, अं अणिमा सिद्ध्यै, लं लघिमासिद्ध्यै, मं महिमासिद्ध्यै,

ईं ईशित्वसिद्ध्यै, वं वशित्वसिद्ध्यै, पं प्राकाम्यसिद्ध्यै, भुं भुक्तिसिद्ध्यै, इं इच्छासिद्ध्यै, पं प्राप्तिसिद्ध्यै, सं सर्वकामसिद्ध्यै, आं ब्राह्मीमात्रे, ईं माहेश्वरीमात्रे, ऊं कौमारीमात्रे, ॠं वैष्णवीमात्रे, लृं वाराहीमात्रे, ऐं माहेन्द्रीमात्रे, औं चामुण्डामात्रे, अः महालक्ष्मी मात्रे, द्रां सर्वसंक्षोभिणीमुद्राशक्त्यै, द्रीं सर्वविद्राविणीमुद्राशत्यै क्लीं सर्वाकर्षिणीमुद्राशक्त्यै ब्लूं सर्ववशङ्करीमुद्राशक्त्यै, सः सर्वोन्मादिनीमुद्राशक्त्यै, क्रों सर्वमहाङ्कुशामुद्राशक्त्यै, ह्स्खफ्रें सर्वखेचरीमुद्राशक्त्यै, ह्सौः सर्वबीजमुद्राशक्त्यै, ऐं सर्वयोनिमुद्रा शक्त्यै, ह्स्रौं ह्स्कलरीं ह्स्रौः सर्वत्रिखण्डामुद्राशक्त्यै, प्रकट योगिनीभ्यः, अं आं सौः त्रिपुराचक्रेश्वर्यै, अं अणिमासिद्ध्यै, द्रां सर्वसंक्षोभिणीमुद्रा शक्त्यै, मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सर्वाशापरिपूरकचक्राय, अं कामाकर्षिण्यै, आं बुद्ध्याकर्षिण्यै, इं अहङ्काराकर्षिण्यै, ईं शब्दाकर्षिण्यै, उं स्पर्शाकर्षिण्यै, ऊं रूपाकर्षिण्यै, ॠं रसाकर्षिण्यै, ॠं गन्धाकर्षिण्यै, लृं चित्ताकर्षिण्यै, लृं धैर्याकर्षिण्यै, एं स्मृत्याकर्षिण्यै, ऐं नामाकर्षिण्यै, ओं बीजाकर्षिण्यै, औं आत्माकर्षिण्यै, अं अमृताकर्षिण्यै, अः शरीराकर्षिण्यै, गुप्तयोगिनीभ्यः, ऐं क्लीं सौः त्रिपुरेशीचक्रेश्वर्यै, लं लघिमासिद्ध्यै, द्रीं सर्वविद्राविणीमुद्राशक्त्यै मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं ह्रीं क्लीं सौः सर्वसंक्षोभणचक्राय, कं खं गं घं ङं अनङ्गकुसुमायै, चं छं जं झं ञं अनङ्गमेखलायै, टं ठं डं ढं णं अनङ्गमदनायै, तं थं दं धं नं अनङ्गमदनातुरायै, पं फं बं भं मं

अनङ्गरेखायै, यं रं लं वं अनङ्गवेगिन्यै, शं षं सं हं अनङ्गाङ्कुशायै, ळं क्षं अनङ्गमालिन्यै, गुप्ततरयोगिनीभ्यः, ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वर्यै, मं महिमासिद्ध्यै, क्लीं सर्वाकर्षिणी मुद्राशक्त्यै, मूलं श्री ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः सर्वसौभाग्यदायकचक्राय, कं सर्वसंक्षोभिण्यै,खं सर्वविद्राविण्यै,गं सर्वाकर्षिण्यै,घं सर्वाह्लादिन्यै, ङं सर्वसंमोहिन्यै, चं सर्वस्तम्भिन्यै, छं सर्वजृम्भिण्यै, जं सर्ववशंकर्यै, झं सर्वरञ्जिन्यै, ञं सर्वोन्मादिन्यै, टं सर्वार्थसाधिन्यै, ठं सर्वसंपत्तिपूरिण्यै, डं सर्वमन्त्रमय्यै, ढं सर्वद्वन्द्वक्षयंकर्यै, संप्रदाययोगिनीभ्यः, हैं ह्क्लीं ह्सौः त्रिपुरवासिनीचक्रेश्वर्यै, ईं ईशित्वसिद्ध्यै, ब्लूं सर्ववशंकरीमुद्राशक्त्यै, मूलं श्री ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्स्सौः सर्वार्थसाधकचक्राय, णं सर्वसिद्धिप्रदायै, तं सर्वसंपत्प्रदायै, थं सर्वप्रियंकर्यै, दं सर्वमङ्गलकारिण्यै, धं सर्व कामप्रदायै, नं सर्वदुःखविमोचिन्यै, पं सर्वमृत्युप्रशमन्यै, फं सर्वविघ्ननिवारिण्यै, बं सर्वाङ्गसुन्दर्यै, भं सर्वसौभाग्यदायिन्यै, कुलोत्तीर्णयोगिनीभ्यः ह्सैं ह्स्क्लीं ह्स्सौः त्रिपुराश्रीचक्रेश्वर्यै,वं वशित्वसिद्ध्यै, सः सर्वोन्मादिनी - मुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें(व्लें)सर्वरक्षाकरचक्राय,मं सर्वज्ञायै, यं सर्वशक्त्यै, रं सर्वैश्वर्यप्रदायै, लं सर्वज्ञानमय्यै, वं सर्वव्याधिविनाशिन्यै, शं सर्वाधारस्वरूपायै, षं सर्वपापहरायै,

सं सर्वानन्दमय्यै, हं सर्वरक्षास्वरूपिण्यै, क्षं सर्वेप्सितफलप्रदायै,
निगर्भयोगिनीभ्यः, ह्रीं क्लीं ब्लें (व्लें) त्रिपुरमालिनी
चक्रेश्वर्यै, पं प्राकाम्यसिद्ध्यै, क्रों सर्वमहाङ्कुशमुद्राशक्त्यै,
क्रों मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं ह्रीं श्रीं सौः सर्वरोगहरचक्राय, अं आं इं ईं उं ऊं ऋं
ॠं ऌं ॡं एं ऐं ओं औं अं अः ब्लूँ वशिनी वाग्देवतायै, कं खं गं
घं ङं क्ल्ह्रीं कामेश्वरी वाग्देवतायै, चं छं जं झं ञं न्व्लीं मोदिनी
वाग्देवतायै,
टं ठं डं ढं णं य्लूं विमला वाग्देवतायै, तं थं दं धं नं ज्म्रीं अरुणा
वाग्देवतायै, पं फं बं भं मं ह्स्ल्व्यूं जयिनी वाग्देवतायै, यं रं लं वं
झ्म्र्यूं सर्वेश्वरी वाग्देवतायै, शं षं सं हं लं क्षं क्ष्म्रीं कौलिनी
वाग्देवतायै, रहस्ययोगिनीभ्यः, ह्रीं श्रीं सौः त्रिपुरसिद्धाचक्रेश्वर्यै,
भुं भुक्तिसिद्ध्यै, हस्खफ्रें सर्वखेचरीमुद्राशक्त्यै, मूलं
श्री ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं यां रां लां वां सां द्रां द्रीं क्लीं ब्लूं सः
सर्वजम्भनेभ्यः कामेश्वरीकामेश्वरबाणेभ्यः स्वहा।।

ओं ऐं ह्रीं श्रीं थं धं सर्वसंमोहनाभ्यां
कामेश्वरीकामेश्वरधनुर्भ्यां स्वाहा।।

ओं ऐं ह्रीं श्रीं ह्रीं आं सर्ववशीकरणाभ्यां
कामेश्वरीकामेश्वरपाशभ्यां स्वाहा।।

ओं ऐं ह्रीं श्रीं क्रो क्रों सर्वस्तम्भनाभ्यां
कामेश्वरीकामेश्वराङ्कुशाभ्यां स्वाहा।।

ओं ऐं ह्रीं श्रीं ह्स्त्रैं ह्स्क्ल्रीं ह्स्रौः सर्वसिद्धिप्रदचक्राय ऐं कएईलह्रीं महाकामेश्वर्यै, क्लीं हसकहलह्रीं महावज्रेश्वर्यै, सौः सकलह्रीं महाभगमालिन्यै,ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौःसकलह्रीं श्रीमहात्रिपुरसुन्दर्यै, अतिरहस्ययोगिनीभ्यः, ह्स्त्रैं ह्स्क्रल्रीं ह्स्रौः त्रिपुराम्बाचक्रेश्वर्यै, इच्छासिद्ध्यै, ह्सौः सर्वबीजमुद्राशक्त्यै, मूलं श्री ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं पञ्चदशी सर्वानन्दमयचक्राय,
मूलं श्री ललितामहात्रिपुरसुन्दर्यै स्वाहा। (इति दशवारं,)
*(Ten times)*

परापरातिरहस्ययोगिन्यै,पञ्चदशी श्रीमहात्रिपुरसुन्दरी चक्रेश्वर्यै, पं प्राप्तिसिद्ध्यै, ऐं सर्वयोनि मुद्राशक्त्यै, मूलं श्री लितामहात्रिपुरसुन्दर्यै स्वाहा।।

ओं ऐं ह्रीं श्रीं (षोडश्युपासकानां)–

हसकल हसकहल सकलह्रीं तुरीयाम्बायै, सं सर्वकामसिद्ध्यै, ह्स्त्रैं ह्स्क्ल्रीं ह्स्रौः सर्वत्रिखण्डामुद्राशक्त्यै, महाषोडशी महात्रिपुरसुन्दरीपराभट्टारिकायै स्वाहा ।।

पञ्चपञ्चिकादिहोमे तत्तन्मन्त्रेण प्रदर्शितरीत्या होमः कर्तव्यः।।

ततो होमावशिष्टेन आज्येन स्रुचं पूरयित्वा पुष्पं फलं अग्रे निधाय स्रुवेणाच्छाद्य मूलेन वौषट् इति उत्थितो जुहुयात् ।।
ततो बलिदानम् । ततो महाव्याहृतिहोमः यथा।।

*One may perform homa using Panchapanchika mantras too. After this, fill the Sruk with ghee, add a fruit and cover it with Sruva;*

*standing chant the mulamantra and with 'Vaushat' and offer the balidana ...(Page: 172).*

७ भूरग्नये च पृथिव्यै च महते च स्वाहा। अग्नये पृथिव्यै महत इदम्। ७ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा। वायवे अन्तरिक्षाय महत् इदम्। ७ सुवरादित्याय च दिवे च महते च स्वाहा। आदित्याय दिवे महत इदम् । ७ भूर्भुवःसुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा। चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम् । इचि चतस्र आहुतीराज्येन हुत्वा।

*(Four times)*

ऐं ह्रीं श्रीं ओं इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेणशिश्ना यत् स्मृतं यत्कृतं यदुक्तं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। परब्रह्मण इदम् । इति ब्रह्मार्पणाहुतिं विदध्यात् ।।

*(Offer Purnahuti)*

एतत्कर्मसमृद्ध्यर्थं जयादिहोमं करिष्ये।



# जयादि होमः

*(This homa is performed to attain the full benefits of the rites performed so far. Offer ghee after chanting every svaaha )*

चित्तं च स्वाहा । चित्तायेदं न मम ।।

चित्तिश्च स्वाहा । चित्या इदं न मम ।।

आकूतं च स्वाहा । आकूतायेदं न मम ।।

आकूतिश्च स्वाहा । आकूत्या इदं न मम ।।

विज्ञातं च स्वाहा । विज्ञातायेदं न मम ।।

विज्ञानं च स्वाहा । विज्ञानायेदं न मम ।।

मनश्च स्वाहा । मनस इदं न मम ।।

शक्करीश्च स्वाहा । शक्करीभ्य इदं न मम ।।

दर्शश्च स्वाहा । दर्शायेदं न मम ।।

पूर्णमासश्च स्वाहा । पूर्णमासायेदं न मम ।।

बृहच्च स्वाहा । बृहत इदं न मम ।।

रथन्तरं च स्वाहा । रथन्तरायेदं न मम ।।

प्रजापतिः जयानिन्द्राय वृष्णो प्रायच्छदुग्रः

पृतनाज्येषु तस्मै विशः समनमंत सर्वास्सः

उग्रः स हि हव्यो बभूव स्वाहा । प्रजापतय इदं न मम ।।

अग्निर्भूतानां – अधिपतिः –समावतु–अस्मिन् ब्रह्मन्

अस्मिन्क्षत्रे–अस्यामाशिषि–अस्यां पुरोधायां अस्मिन् कर्मन् –

अस्यां देवहूत्यां–स्वाहा । अग्नय इदं न मम ।।

इन्द्रोज्येष्ठानां – अधिपतिः – समावतु–अस्मिन् ब्रह्मन् –

अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–

अस्यां देवहूत्यां – स्वाहा। इन्द्राय इदं न मम ।।

यमः पृथिव्याः–अधिपतिः – समावतु– अस्मिन् ब्रह्मन्

अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–

अस्यां देवहूत्यां – स्वाहा । यमाय इदं न मम ।।

वायुरन्तरिक्षस्य–अधिपतिः –समावतु– अस्मिन् ब्रह्मन्

अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–

अस्यां देवहूत्यां स्वाहा । वायव इदं न मम ।।

सूर्यो दिवः अधिपतिः–समावतु–अस्मिन् ब्रह्मन् अस्मिन्क्षत्रे–

अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन् –

अस्यां देवहूत्यां – स्वाहा । सूर्याय इदं न मम ।।

चन्द्रमाः नक्षत्राणां – अधिपतिः – समावतु– अस्मिन् ब्रह्मन्

अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–

अस्यां देवहूत्यां – स्वाहा। चन्द्रमस इदं न मम ।।

बृहस्पतिः ब्रह्मणः अधिपतिः समावतु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां –स्वाहा। बृहस्पतय इदं न मम ।।

मित्रः सत्यानां अधिपतिः समावतु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां– स्वाहा। मित्राय इदं न मम ।।

वरुणोपां – अधिपतिः– समावतु–अस्मिन् ब्रह्मन् –
अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा। वरुणाय इदं न मम ।।

समुद्रस्स्त्रोत्यानां – अधिपतिः समावतु – अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा। समुद्राय इदं न मम ।।

अन्नं साम्राज्यानां अधिपतिः – तन्मावतु अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा। अन्नाय इदं न मम ।।

सोम ओषधीनां–अधिपतिः–समावतु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषि– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा। सोमाय इदं न मम ।।

सविताप्रंसवानां – अधिंपतिः – समांवतु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषिं– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा । सवित्र इदं न मम।।

रुद्रपंशूनां – अधिंपतिः – समांवतु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषिं– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा । रुद्राय इदं न मम।।अप उपस्पृश्य

त्वष्टा रूपाणां – अधिंपतिः – समांवतु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषिं– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा । त्वष्ट्र इदं न मम।।

विष्णुःपर्वतानां – अधिंपतिः – समांवतु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषिं– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा । विष्णव इदं न मम।।

मरुतो गणानां – अधिंपतयः – तेमांऽवन्तु–अस्मिन् ब्रह्मन्
अस्मिन्क्षत्रे– अस्यामाशिषिं– अस्यां पुरोधायां अस्मिन् कर्मन्–
अस्यां देवहूत्यां – स्वाहा । मरुद्भ्य इदं न मम।।

पितंरः–पितामहाः परेऽवरे – ततांः ततामहाः–इहमांवत–
अस्मिन् ब्रह्मन् अस्मिन्क्षत्रे– अस्यामाशिषिं– अस्यां पुरोधायां

अस्मिन् कर्मन् – अस्यां देवहूत्यां – स्वाहा । पितृभ्य इदं न मम ।। अप उपस्पृश्य ।

ऋताषाट् –ऋतंधामा –अग्निर्गन्धर्वः तस्योषंधयःअप्सरसः – ऊर्जो –नाम स इदं – ब्रह्मक्षत्रं – पातु–ताइदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा । अग्नये गन्धर्वाय इदं न मम ।। ताभ्यस्स्वाहा । ओषधीभ्यःअप्सरोभ्यः इदं न मम ।।

सꣳहितो विश्वसामा–सूर्यो गन्धर्वः तस्य मरीचयः–अप्सरसः– आयुवो नाम – स इदं ब्रह्मक्षत्रं–पातु–ताइदं ब्रह्मक्षत्रंपान्तु तस्मै स्वाहा । सूर्याय गन्धर्वाय इदं न मम ।। ताभ्यस्स्वाहा मरीचिभ्यः अप्सरोभ्यः इदं न मम।।

सुषुम्नः सूर्यरश्मिः चन्द्रमागन्धर्वः तस्य नक्षत्राणि अप्सरसः– बेकुरयो नाम – स इदं ब्रह्मक्षत्रं – पातु–ताइदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा । चन्द्रमसे गन्धर्वाय इदं न मम ।। ताभ्यः स्वाहा । नक्षत्रेभ्यः अप्सरोभ्यः इदं न मम ।।

भुज्युः सुपर्णः यज्ञो गन्धर्वः तस्य दक्षिणाः– अप्सरसःस्तवा नाम – स इदं ब्रह्मक्षत्रं – पातु– ताइदंब्रह्मक्षत्रं पान्तु तस्मै स्वाहा । यज्ञाय गन्धर्वाय इदं न मम । ताभ्यस्स्वाहा । दक्षिणाभ्यः अप्सरोभ्यः इदं न मम ।।

प्रजापति विश्वकर्मा – मनो गन्धर्वः–तस्य–ऋक् सामानि–अप्सरसः वह्नयो नाम–स इदं ब्रह्मक्षत्रं–पातु–ताइदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा। मनसे गन्धर्वाय इदं न मम। ताभ्यस्स्वाहा। ऋक् सामेभ्यः अप्सरोभ्यः इदं न मम ।।

इषिरः विश्वव्यचाः वातो गन्धर्वः–तस्यापः अप्सरसः–मुदा नाम – स इदं ब्रह्मक्षत्रं–पातु –ताइदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा। वाताय गन्धर्वाय इदं न मम। ताभ्यः स्वाहा। अद्भ्यः अप्सरोभ्यः इदं न मम ।।

भुवनस्यपते–यस्यते–उपरिगृहाः–इह च–सनोरास्व अज्यानि–रायस्पोषं – सुवीर्यं – संवत्सरीणां ९स्वस्तिं स्वाहा भूवनस्य पत्य इदं न मम ।।

परमेष्ठी–अधिपतिः मृत्युर्गन्धर्वः–तस्य विश्वं–अप्सरसः–भुवोनाम–स इदं ब्रह्म क्षत्रं–पातु –ताइदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा। मृत्यवे गन्धर्वाय इदं न मम। ताभ्यः स्वाहा। विश्वस्मै अप्सरोभ्यः इदं न मम ।।

सुक्षितिः–सुभूतिः–भद्रकृत्– सुवर्वान् – पर्जन्यौगन्धर्वः–तास्यंविद्युतः– अप्सरसःरुचोनाम स इदं ब्रह्मक्षत्रं–पातु–ताइदं

ब्रह्मं क्षत्रं पान्तु तस्मै स्वाहा। पर्जन्याय गन्धर्वाय इदं न मम।
ताभ्यः स्वाहा। विद्युद्भ्यो अप्सरोभ्यः इदं न मम।।

दूरेहेतिः अमृड्यः मृत्युर्गन्धर्वः – तस्य–प्रजा अप्सरसः भीरुवो नाम – स इदं ब्रह्मक्षत्रं–पातु–ताइदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा। मृत्यवे गन्धर्वाय इदं न मम। ताभ्यः स्वाहा । प्रजाभ्यः अप्सरोभ्यः इदं न मम।।

चारुः कृपणकाशी–कामोगन्धर्वः तस्याधयः अप्सरसः शोचयन्तीर्नाम–स इदं ब्रह्मक्षत्रं–पातु–ताइदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा। कामाय गन्धर्वाय इदं न मम। ताभ्यः स्वाहा। आधिभ्यः अप्सरोभ्यः इदं न मम।।

स नः–भुवनस्य पते–यस्यंते–उपरि गृहाः इह च–उरुब्रह्मणेऽस्मै–क्षत्राय–महि–शर्म–यच्छस्वाहा। भुवनस्य पत्ये इदं न मम।।

प्रजापते – नत्वत् –एतानि अन्योविश्वा–जातानि–परिता–बभूव–यत्कामास्ते–जुहुमःतन्नोअस्तु–वयꣳस्याम पतयो रयीणां स्वाहा ।। प्रजापतय इदं न मम ।।

भूस्स्वाहा । अग्नय इदं न मम।। भुवस्स्वाहा। वायव इदं न मम।। सुवस्स्वाहा।। सूर्याय इदं न मम।।

यंदस्य–कर्मणः अत्यरीरिचं–यद्वान्यूनं–इहाकरं–अग्निष्टत् – स्विष्टकृत् –विद्वान् –सर्वꣳस्विष्टं सुहुतं–करोतुस्वाहा। अग्नये स्विष्टकृत इदं न मम ।।

*( Offer a drop of ghee on the three samidha sticks placed on West, South and North . One should gesticulate as the top, middle and the base of the Samidhas are being cleansed. Place the Samidha from the West in to the fire and keep aside the other two sides. Then take a little ghee in both the ladles and offer it into the fire)*

*(Having chanted* अस्मिन् कर्मणि अविज्ञात प्रायश्चित्त होमं करिष्ये । *(continue further homa)*

अनाज्ञातं – यदाज्ञातं – यज्ञस्य – क्रियते मिथु ।अग्ने तदस्य–

कल्पय त्वꣳहि वेत्थ–यथातथं स्वाहा । अग्नय इदं न मम ।।

पुरुषसम्मितः यज्ञः । यज्ञः पुरुषसम्मितः । अग्ने तदस्य कल्पय–

त्वंꣳहि वेत्थ यथातथं स्वाहा । अग्नय इदं न मम ।।

यत्पाकत्रामनसा दीनदक्षान । यज्ञस्य–मन्वतै–मर्तासः –

अग्निष्टद्धोता – ऋतुविद्विजानन् – यजिष्ठो देवान् –

ऋतुशोयंजाति स्वाहा ।। अग्नय इदं न मम ।।

भूस्स्वाहा । अग्नय इदं न मम ।। भुवस्स्वाहा ।। वायव इदं न

मम ।। सुवस्स्वाहा । सूर्याय इदं न मम । ओं भूर्भुवस्सुवस्स्वाहा ।

प्रजापतय इदं न मम ।।

अस्मिन् नवावरण होम कर्मणि मध्ये संभावित समस्त

दोष प्रायश्चित्तार्थं सर्वप्रायश्चित्त होमं होष्यामि । ओं

भूर्भुवस्सुवस्स्वाहा प्रजापतय इदं न मम ।। श्री विष्णवेस्वाहा ।

विष्णवे परमात्मने इदं न मम ।। नमो रुद्राय पशुपतये स्वाहा ।

रुद्राय पशुपतये इदं न मम ।। अप उपस्पृश्य ।।

*( Wash hands)*

*Then*

*( Join both the laddles/ leaves and chant the following mantras)*

सप्त तें अग्ने–समिधंः सप्तजिह्वाः सप्तऋषंयः–सप्तधामं–

प्रियाणिं–सप्तहोत्राः–सप्तधात्वा–यजन्ति सप्तयोनीः आपृंणस्व

घृतेनस्स्वाहा । अग्नये सप्तवत इदं न मम ।।

आज्यपात्रमुत्तरतोनिधाय

*(Place the ghee vessel in to North.)*

अपः उपस्पृश्य,

*(Touch the water and cleanse the hands )*

*( Perform pranayama once as expatiation for the mistakes that might have occurred in the entire process of the homa or puja.*

प्रायश्चित्तप्राणायामं – ओं भूः ....सुवरोम्

*(Chant the following mantra and pour water on the given side as written against each mantra.)*

अदिते अन्वंमꣳस्थाः –*(South)* अनुमते अन्वंमꣳस्थाः – (West)
सरस्वते अन्वंमꣳस्थाः –*(North)* देवसवितः प्रासावीः –
*(all the sides)*

वरुणाय नमः सकलाराधनैः स्वर्चितम् –
*(Place the praneeta vessel (kept in the north) in front. Pour a little water and add a little akshata in it. Hold the vessel in the left hand)*

प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम्। ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम् – इति प्रतिदिशमुत्सृज्य पुरस्तात् अक्षतोपरि निस्राव्य, तेन – ब्राह्मणेष्वमृतं हितं येन देवाः पवित्रेणात्मानं पुनते सदा तेन – सहस्रधारेण पावमान्यः पुनन्तु मा – इत्यात्मानं प्रोक्ष्य दक्षिणतो निषादितं ब्रह्माणं संपूज्य तस्य वरं दत्त्वा प्रागादिपरिस्तरणमुत्तरे विसृजेत् ।

*(Offer water twice in East, South, West and North. Again sprinkle a little water upwards. Pour the remaining water on the ground towards the East. Sprinkle the water from the ground on everyone.)*

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ।। इत्युपस्थाय

*Stand and with hands folded, pray to lord Agni with the above said mantra:*

चिदग्नि, उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्।
आयुः प्रजाꣳरग्निमस्मासु धेहि अजस्रो दीदिहि नो दुरोणे।।
ललिताग्निमात्मन्युद्वासयामि नमः इत्युद्वास्य हृदये अञ्जलिं दद्यात्।

*If the invocation of Mother has been from Sriyantra, then add a drop of Ghee on the Sriyantra and imagine Mother's consciousness as merging back into the Yantra. If the invocation has been from within, Then invoke Mother back into one's consciousness.*

तद्भूतितिलकं–*With the following mantra apply the Holy ash from the Homa mixed with little ghee on ones forehead.* त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् अगस्त्यस्य त्यायुषं यद्देवानां त्र्यायुषं तन्मेऽस्तु त्र्यायुषं। शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः।।

इति त्रियायुषेण मन्त्रेण धारयेत् । इति शिवम् ।।
ब्रह्मन् वरं ते ददामि
ब्रह्मणे नमः सकलाराधनैः स्वर्चितम्

*(Offer the entire homa into the feet of Mother. - Offer dakshina to the priest )*



# ।। द्वादश खण्डः ।।

## ( आह्निकम् )

## १. पादुकापञ्जरस्तुतिः

*This set of verse along with Ajapa and Rashmimala should be contemplated as soon as one wakes up in the morning.*

*While chanting the gurupadukapanchaka, contemplate on the lotus feet of one's preceptor, who is verily the embodiment of Mother as resing on one's brahmarandhra (pericap).*

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे । १

तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया ।
कोणलक्षितहळक्षमण्डलीं भावलक्ष्यमबलालयं भजे ।। २

तत्पुटे पटुतडित्कडारिमस्पर्धमानमणिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं वपुर्नादबिन्दुमणिपीठमुज्ज्वलम् ।। ३

ऊर्ध्वमस्य हुतभुक्शिखात्रयं तद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहोच्चिदोत्कटं व्यामृशामि युगमादिहंसयोः ।। ४

तत्र नाथचरणारविन्दयोः कुङ्कुमासवपरीमरन्दयोः ।
द्वन्द्वबिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम् ।। ५

निषक्तमणिपादुका-नियमितौघकोलाहलं,
स्फुरत्किसलयारुणं नखसमुल्लसच्चन्द्रकम् ।
परामृतसरोवरोदितसरोज-सद्रोचिषं,
भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ।।

(गुरु-परमगुरु-परमेष्ठिगुरु-पादुकापूजनं भावयेत् )

# २. अजपाजपविधिः

*Ajapa is mental contemplation (Niddhidhyasana) of identity of oneself with Supreme, which is expressed by the term (Om hamsa-soham -ओं हंस सोहं ). A person breathes 21600 times every day. Each breath is taken to be a Japa. Hence everyday during the day break, the ajapa done in the previous day is offered to the various deities stationed in the various chakras within our body.*

*Perform the Sankalpa that "I offer the ajapa done in the previous day to these various deities"*

*Now offer 600 Japa to Ganapati in Muladhara*

*6000 Japa to Brahma in Svadhishthana*

*6000Japa to Vishnu in Manipura*

*6000 Japa to Shiva in Anahata*

*1000 Japa to Jivatman in Vishuddhi*

*1000 Japa to Guru in Ajnya*

*1000 Japa to Paramatma in Sahasrana*

अथ पूर्वेद्युः सूर्योदयादारभ्याद्यसूर्योदयपर्यन्तं षट्शताधिकैकविंशति- साहस्रिकां निःश्वासोच्छ्वासरूपिणीमजपां मूलाधारादिब्रह्मरन्ध्रान्तसप्तचक्रनिवासिनीभ्यो देवताभ्यो निवेदयिष्ये, इति सङ्कल्प्य क्रमशो निवेदयेत् । यथा।

मूलाधारे चतुर्दलपद्मे वं शं षं सं चतुरक्षरे चतुष्कोणयन्त्रे ऐरावतवाहने लंबीजे स्थिताय सिद्धिबुद्धिसहिताय कुङ्कुमवर्णाय महागणपतये षट्शतमजपाजपं निवेदयामि।

स्वाधिष्ठाने षड्दलपद्मे बं भं मं यं रं लं षडक्षरे अर्धचन्द्रे यन्त्रे मकरवाहने वं बीजे स्थिताय सरस्वतीशक्तिसहिताय सिन्दूरवर्णाय ब्रह्मणे षट्सहस्रमजपाजपं निवेदयामि।

मणिपूरचक्रेदशदलपद्मे डं ढं णं तं थं दं धं नं पं फं दशाक्षरे त्रिकोणयन्त्रे मेषवाहने रं बीजे स्थिताय लक्ष्मीशक्तिसहिताय नीलवर्णाय विष्णवे षट्सहस्रमजपाजपं निवेदयामि।

अनाहतचक्रे द्वादशदलपद्मे कं खं गं घं ङं चं छं जं झं ञं टं ठं द्वादशाक्षरे षट्कोणयन्त्रे हरिणवाहने यं बीजे स्थिताय पार्वतीशक्तिसहिताय हेमवर्णाय परमशिवाय षट्सहस्रमजपाजपं निवेदयामि।

विशुद्धिचक्रे षोडशदलपद्मे अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः षोडशाक्षरे शून्ययन्त्रे हस्तिवाहने हं बीजे स्थिताय प्राणशक्तिसहिताय शुद्धस्फटिकसङ्काशाय जीवाय सहस्रमेकमजपाजपं निवेदयामि।

आज्ञाचक्रे द्विदलपद्मे श्वेतवर्णे हं क्षं द्व्यक्षरे लिङ्गयन्त्रे नरवाहने प्रणव-बीजे स्थिताय ज्ञानशक्तिसहिताय विद्युद्वर्णाय गुरवे सहस्रमेकमजपाजपं निवेदयामि।

ब्रह्मरन्ध्रे सहस्रदलपद्मे चित्रवर्णे अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं **इति विंशतिवारोच्चारिते** सहस्राक्षरे विसर्गयन्त्रे बिन्दुवाहने पूर्णचन्द्रमण्डले आनन्दमहासमुद्रमध्ये चिन्मयमणिद्वीपे चित्सारचिन्तामणिमयर्मन्दिरे कल्पवृक्षाधस्तले अव्याकृतब्रह्ममहासिंहासने स्थिताय नानावर्णाय वर्णातीताय चिच्छक्तिसहिताय परमात्मने सहस्रमेकमजपाजपं निवेदयामि। (इति निवेदयेत् ।)

(अथ कतिचित् क्षणान् 'हंसः सोऽहम्' इति श्वासोच्छ्वासेषु भावयेत् ।)

*Now contemplate on the unity of self with Supreme while chanting "hamsaha soham" with every breath for a while.*

हकारेण बहिर्याति सकारेण विशेत् पुनः ।
हंसोऽतिपरमं मन्त्रं जीवो जपति सर्वदा ।।

(इति ध्यात्वा मानसैरुपचारैः सर्वान् देवान् पूजयेत् ।)

*Mentally worship all the deities with Panchopachara.*

लं पृथिव्यात्मकं गन्धं समर्पयामि । (कनिष्ठिकाङ्गुष्ठाभ्याम् )।
हं आकाशात्मकं पुष्पं समर्पयामि । (अङ्गुष्ठतर्जनीभ्याम् )।
यं वाय्वात्मकं धूपमाघ्रापयामि । (तर्जन्यङ्गुष्ठाभ्याम् ।)
रं वह्न्यात्मकं दीपं दर्शयामि । (अङ्गुष्ठमध्यमाभ्याम् )।
वं अमृतात्मकं नैवेद्यं निवेदयामि। (अङ्गुष्ठानामिकाभ्याम् )।
सं सर्वात्मकं ताम्बूलादिसर्वोपचारान् समर्पयामि ।
(साङ्गुष्ठाभिः सर्वाभिरङ्गुलीभिः। )

## ३. रश्मिमालामन्त्राः

*The tantras opine that all the various deities are various facets of the Supreme, they are indivisible like the rays of light from its source. In Rashmimala, the mulamantras of Various divinities is contemplated as emanating from the Supreme consciousness-Lalita, while chanting these mantras, contemplate on the various positions where the deities of these mantras are stationed.*

*1. Muladhara, 2. Hrdaya-heart, 3. Phala-Forehead, 4. Brahmarandhra - Pericap 5. Dvavashanta-two inches above the pericap*

*(One should get intiation from one's Guru for chanting these mantras)*

ओं भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः
प्रचोदयात् । (इति गायत्री, मूलाधारे) ।। १

यत इन्द्र भयामहे ततो नो अभयं कृधि।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि।।

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः।।
इत्यैन्द्री विद्या सप्तषष्ट्यर्णा सङ्कटे भयनाशिनी, हृदये)।। २
ओं घृणिः सूर्य आदित्योम् ।
(इत्यष्टार्णा सौरी तेजोदा फाले)।। ३

ओं (इति प्रणवः केवलो ब्रह्मविद्या मुक्तिप्रदा, ब्रह्मरन्ध्रे)।। ४
ओं परो रजसेऽसावदोम् ।
(इति नवार्णा तुरीया। गायत्री स्वैक्यविमर्शिनी, द्वादशान्ते)।। ५

******

ओं सूर्याक्षितेजसे नमः। खेचराय नमः। असतो मा सद्गमय।
तमसो मा ज्योतिर्गमय। मृत्योर्माऽमृतं गमय। उष्णो भगवान्
शुचिरूपः। हंसो भगवान् शुचिरप्रतिरूपः।

विश्वरूपं घृणिनं जातवेदसं हिरण्मयं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः।।
ओं नमो भगवते सूर्यायाहोवाहिनि वाहिन्यहोवाहिनि वाहिनि
स्वाहा।।

वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः।
अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्धस्मान्निधयेव बद्धान् ।।

पुण्डरीकाक्षाय नमः। पुष्करेक्षणाय नमः। अमलेक्षणाय नमः।
कमलेक्षणाय नमः। विश्वरूपाय नमः। श्रीमहाविष्णवे नमः।
(इति षोडषमन्त्रसमष्टिरूपिणी चक्षुष्मती विद्या दूरदृष्टिसिद्धिप्रदा, मूलाधारे)।। ६

ओं गन्धर्वराज विश्वावसो ममाभिलषितां कन्यां प्रयच्छ स्वाहा।
(इत्युत्तमकन्याविवाहदायिनी, हृदये)।। ७

ओं नमो रुद्राय पथिषदे स्वस्ति मां सम्पारय।।
(इति मार्गसङ्कटहारिणी, फाले)।। ८

ओं तारे तुत्तारे तुरे स्वाहा।
(इति जलापच्छमनी, ब्रह्मरन्ध्रे) ।। ९

अच्युताय नमः, अनन्ताय नमः. गोविन्दाय नमः।
(इति महाव्याधिनाशिनी नामत्रयी विद्या, द्वादशान्ते)।। १०

******

ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद स्वजनं मे वशमानाय स्वाहा। (इति महागणपतिविद्या प्रत्यूहशमनी, मूलाधारे)।। ११

ओं नमः शिवायै ओं नमः शिवाय।
(इति द्वादशार्णा शिवतत्त्वविमर्शिनी, हृदये)।। १२

ओं जुंसः मां पालय पालय।
(इति दशार्णा मृत्योरपि मृत्युरेषा विद्या, फाले)।। १३

ओं नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओं ।
(इति श्रुतधारिणी विद्या, ब्रह्मरन्ध्रे)।। १४

अं आं ......अः कं खं ....क्षं।
इति सबिन्दुरकारादिक्षकारान्तवर्णात्मिका मातृका सर्वज्ञताकारी, द्वादशान्ते)।। १५

******

हसकलह्रीं हसकहलह्रीं सकलह्रीं।
इति लोपामुद्राविद्या स्वस्वरूपविमर्शिनी, मालाधारे)।। १६

क्लीं हैं ह्सौः स्हौः हैं क्लीं।
(इति षट्कूटा सम्पत्करी विद्या, हृदये)।। १७

सं सृष्टिनित्ये स्वाहा, हं स्थितिपूर्णे नमः, रं महासंहारिणि कृशे चण्डकालि फट्, रं ह्स्ख्फ्रें महानाख्ये अनन्तभास्करि महाचण्डकालि फट् , रं महासंहारिणि कृशे चण्डकालि फट् हं स्थितिपूर्णे नमः सं सृष्टिनित्ये स्वाहा हस्ख्फ्रें महाचण्डयोगेश्वरि।

इति विद्यापञ्चकरूपिणी कालसङ्कर्षिणी परमायुःप्रदा फाले)।।१८
ऐं ह्रीं श्रीं हस्ख्फ्रें ह्सौः अहमहं अहमहं ह्सौः ह्स्ख्फ्रें श्रीं ह्रीं ऐं।।१९

(इति शुद्धज्ञानदा शाम्भवीविद्या, ब्रह्मरन्ध्रे)
सौः। (इयं परा विद्या द्वादशान्ते)।। २०

******

ऐं क्लीं सौः, सौः क्लीं ऐं, ऐं क्लीं सौः।
(इति नवाक्षरी श्रीदेव्यङ्गभूता, बाला) २१

ह्रीं श्रीं क्लीं ओं नमो भगवति अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा। (इति श्रीदेव्या उपाङ्गभूता, अन्नपूर्णा)।। २२

ओं आं ह्रीं क्रों एहि परमेश्वरि स्वाहा।
(इयं श्रीदेवीप्रत्यङ्गभूता, अश्वारूढा)।। २३

ऐं ह्रीं श्रीं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः
अमुकानन्दनाथ श्रीपादुकां पूजयामि नमः।
(इति श्रीविद्यागुरुपादुका)।। २४

कएईलह्रीं हसकहलह्रीं सकलह्रीं।
(इति मूलविद्या कादिनाम्नी। बाला, अन्नपूर्णा, अश्वारूढा, श्रीपादुकाचेत्येताभिश्चतसृभिर्युक्ता मूलविद्या साम्राज्ञी, मूलाधारे ध्येया)।। २५

ऐं नमः उच्छिष्टचण्डालि मातङ्गि सर्ववशङ्करि स्वाहा।
(इति श्यामाङ्गभूता, लघुश्यामला)।। २६

'ऐं क्लीं सौः वद वद वाग्वादिनि स्वाहा'।
(इयं श्यामाङ्गभूता, वाग्वादिनी)।। २७

'ओं ओष्ठपिधाना नकुली दन्तैः परिवृता पविः
सर्वस्यै वाच ईशाना चारु मामिह वादयेत्'।
(इयं श्यामाप्रत्यङ्गभूता, नकुलीविद्या)।। २८

'ऐं क्लीं सौः ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः
अमुकानन्दनाथश्रीपादुकां पूजयामि नमः'।
(इति श्यामा-गुरुपादुका)।। २९

'ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति श्रीमातङ्गीश्वरि सर्वजन मनोहरि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुष वशङ्करि सर्वदुष्टमृगवशङ्करिसर्वसत्त्ववशङ्करिसर्वलोक वशङ्करि(त्रैलोक्यं) अमुकं मे वशमानय स्वाहा सौःक्लीं ऐं श्रीं ह्रीं ऐं'।

(इत्यष्टनवतिवर्णा राजश्यामला पूर्वोक्ताभिरङ्गोपाङ्ग - पादुकेत्येताभिश्चतसृभिर्विद्याभिः सहिता हृच्चक्रे ध्येया)।। ३०

लृं वाराहि लृं उन्मत्तभैरविपादुकाभ्यां नमः।
(इयं वार्ताल्यङ्गभूता, लघुवार्ताली) ।। ३१

ओं ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा।
(इयं वार्ताल्या उपाङ्गभूता, स्वप्नवाराही)।।। ३२

ऐं नमो भगवति तिरस्करिणि महामाये महानिद्रे
सकलपशुजनमनश्चक्षुश्रोत्रतिरस्करणं कुरु कुरु हुं फट् स्वाहा।
(इयं वार्ताली प्रत्यङ्गभूता तिरस्करणी)।। ३३

ऐं ग्लौं ह्स्ख्फ्रें हसक्षलवरयूं सहक्षमलवरयीं ह्सौः स्हौः
अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः।
(एषा वार्ताली-गुरुपादुका)।। ३४

ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि
वराहमुखि वराहमुखि अन्धे अन्धिनि नमः। रुन्धे रुन्धिनि नमः।
जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भिनि नमः।
सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं
कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ऐं ठः ठः ठः ठः हुं अस्त्राय फट् ।
(इति द्वादशोत्तरशताक्षरो महावाराहीमन्त्रः)।। ३५

(पूर्वोक्ताभिश्चतसृभिर्युक्तेयं महावाराही आज्ञाचक्रे ध्येया)
कएईल हसकहल सकलह्रीं। (इयं कादिपूर्तिविद्या।)
हसकल हसकहल सकल ह्रीं । (इयं हादिपूर्तिविद्या)
(इति श्रीपूर्तिविद्या, ब्रह्मरन्ध्रे ध्येया)।। ३६

ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं
ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः।
(इति सर्वमन्त्रसमष्टिरूपिणी महापादुका, द्वादशान्ते)।। ३७

इति रश्मिमालामन्त्राः।

पुस्तके लिखितान् मन्त्रानवलोक्य जपेत् तु यः।
स जीवन्नेव चाण्डालो मृतः श्वा चाभिजायते।।
(इति साङ्ख्यायनतन्त्रवचनेन गुरुमुखागमं विना जपस्य निषेधात् ।।)

## ४. अथ महाषोढान्यासः

*By the performance of Mahashodha-nyasa, one attains the divine union with Mother Lalita eventually.*

प्रपञ्चो भुवनं मुर्तिर्मन्त्रदैवतमातरः।
महाषोढाह्वयो न्यासः सर्वन्यासोत्तमोत्तमः।।

अस्य श्री महाषोढान्यासस्य ब्रह्मा ऋषिः, जगतीच्छन्दः श्रीअर्धनारीश्वरो देवता, श्रीविद्याङ्गत्वेन न्यासे विनियोगः (इति ऋष्यादिकं स्मृत्वा मूर्धादिषु विन्यस्याऽङ्गन्यासं कुर्यात् )।

ओं ऐं ह्रीं श्रीं ह्सौः स्हौः(६) इति षडक्षरमन्त्रपूर्वकं सर्वं न्यसेत् )।
यथा–

'' हों ईशानाय नमः (अङ्गुष्ठयोः),
'' हें तत्पुरुषाय नमः (तर्जन्योः),
'' हुं अघोराय नमः (मध्यमयोः),
'' हिं वामदेवाय नमः (अनामिकयोः),
'' हं सद्योजाताय नमः (कनिष्ठिकयोः),
'' हों ईशानाय नमः (मूर्ध्नि),
'' हें तत्पुरुषाय नमः (मुखे),
'' हुं अघोराय नमः (हृदये),
'' हिं वामदेवाय नमः (गुह्ये),
'' हं सद्योजाताय नमः (पादयोः),
'' हों ईशानायोर्ध्ववक्त्राय नमः (मूर्ध्नि अङ्गुष्ठेन),
'' हें तत्पुरुषायपूर्ववक्त्राय नमः (मुखे, तर्जन्या),

'' हुं अघोराय दक्षिणवक्त्राय नमः (दक्षकर्णे, मध्यमया),
'' हिं वामदेवायोत्तरवक्त्राय नमः (वामकर्णे, अनामिकया),
'' हं सद्योजाताय पश्चिमवक्त्राय नमः (चोरकूपे, कण्ठाधः, कनिष्ठया),

(अयं पञ्चवक्त्रन्यासः क्रमेणाङ्गुष्ठादि-पञ्चाङ्गुलीभिरेकैकाङ्गुलिनैकैकवक्त्रे न्यस्तव्यः। एवं न्यासं विधाय ततो ह्सां ह्सीं ह्सूं ह्सैं ह्सौः ह्सः. इत्यादिभिः करषडङ्गन्यासं कृत्वा वक्ष्यमाणरूपं देवं हृदये ध्यात्वा न्यसेत् )।

ओघप्रकारान्तरेण ध्यानम् -
पञ्चवक्त्रं चतुर्बाहुं सर्वाभरणभूषितम् ।
चन्द्रसूर्यसहस्राभं शिवशक्त्यात्मकं भजे।।

### १. प्रपञ्चन्यासः

ओं ऐं ह्रीं श्रीं ह्सौः स्हौः अं प्रपञ्चरूपायै श्रिये नमः (शिरसि),
६ आं द्वीपरूपायै मायायै नमः (मुखवृत्ते) (ललाटे),
६ इं जलधिरूपायै कमलायै नमः (दक्षनेत्रे),
'' ईं गिरिरूपायै विष्णुवल्लभायै नमः (वामनेत्रे)
'' उं पत्तनरूपायै पद्मधारिण्यै नमः (दक्षकर्णे),
'' ऊं पीठरूपायै समुद्रतनयायै नमः (वामकर्णे),
'' ऋं क्षेत्ररूपायै लोकमात्रे नमः (दक्षनासापुटे),
'' ॠं वनरूपायै कमलवासिन्यै नमः ( वामनासापुटे),

६ ऌं आश्रमरूपायै इन्दिरायै नमः (दक्षगण्डे),
६ ॡं गुहारूपायै मायायै नमः (वामगण्डे),
६ एं नदीरूपायै रमायै नमः (ऊर्ध्वोष्ठे),
६ ऐं चत्वररूपायै पद्मायै नमः (अधरोष्ठे),
६ ओं उद्भिज्जरूपायै नारायणप्रियायै नमः (ऊर्ध्वदन्तपंक्तौ)

६ औं स्वेदजरूपायै सिद्धलक्ष्म्यै नमः (अधोदन्तपंक्तौ).
६ अं अण्डजरूपायै राजलक्ष्म्यै नमः (जिह्वाग्रे)
६ अः जरायुजरूपायै महालक्ष्म्यै नमः (कण्ठे),
६ कं लवरूपायै आर्यायै नमः (दक्षबाहुमुले),
६ खं त्रुटिरूपायै उमायै नमः (दक्षकूर्परे),
६ गं कलारूपायै चण्डिकायै नमः (दक्षमणिबन्धे),
६ घं काष्ठारूपायै दुर्गायै नमः (दक्षकराङ्गुलिमूले),
६ ङं निमेषरूपायै शिवायै नमः (दक्षकराङ्गुल्यग्रे),
६ चं श्वासरूपायै अपर्णायै नमः (वामबाहुमूले),
६ छं घटिकारूपायै अम्बिकायै नमः (वामकूर्परे),
६ जं मुहूर्तरूपायै सत्यै नमः (वाममणिबन्धे).
६ झं प्रहररूपायै ईश्वर्यै नमः ( वामकराङ्गुलिमूले),
६ ञं दिवसरूपायै शाम्भव्यै नमः (वामकराङ्गुल्यग्रे),
६ टं सन्ध्यारूपायै ईशान्यै नमः (दक्षोरुमूले),
६ ठं रात्रिरूपायै पार्वत्यै नमः (दक्षजानुनि),
६ डं तिथिरूपायै सर्वमङ्गलायै नमः (दक्षगुल्फे),
६ ढं वाररूपायै दाक्षायण्यै नमः (दक्षपादाङ्गुलिमूले),
६ णं नक्षत्ररूपायै हैमवत्यै नमः ( दक्षपादाङ्गुल्यग्रे),
६ तं योगरूपायै महामायायै नमः (वामोरुमूले),
६ थं करणरूपायै महेश्वर्यै नमः (वामजानुनि),
६ दं पक्षरूपायै मृडान्यै नमः (वामगुल्फे),
६ धं मासरूपायै रुद्राण्यै नमः (वामपादाङ्गुलिमूले),
६ नं राशिरूपायै शर्वाण्यै नमः (वामपादाङ्गुल्यग्रे),
६ पं ऋतुरूपायै परमेश्वर्यै नमः (दक्षपार्श्वे),
६ फं अयनरूपायै काल्यै नमः (वामपार्श्वे),
६ बं वत्सररूपायै कात्यायन्यै नमः (पृष्ठे),
६ भं युगरूपायै गौर्यै नमः (नाभौ),

६ मं प्रलयरूपायै भवान्यै नमः (जठरे).
६ यं पञ्चभूतरूपायै ब्राह्म्यै नमः (हृदये),
६ रं पञ्चतन्मात्रारूपायै वागीश्वर्यै नमः (दक्षकक्षे),
६ लं पञ्चकर्मेन्द्रियरूपायै वाण्यै नमः (गलपृष्ठे),
६ वं पञ्चज्ञानेन्द्रियरूपायै सावित्र्यै नमः (वामकक्षे),
६ शं पञ्चप्राणरूपायै सरस्वत्यै नमः (हृदयादिदक्षकराङ्गुल्यन्तं),
६ षं गुणत्रयरूपायै गायत्र्यै नमः (हृदयादिवामकराङ्गुल्यन्तं),
६ सं अन्तःकरणचतुष्टयरूपायै वाक्प्रदायै नमः (हृदयादिदक्षपादाङ्गुल्यन्तं),
६ हं अवस्थाचतुष्टयरूपायै शारदायै नमः (हृदयादि-वाम-पादाङ्गुल्यन्तं),
६ ळं सर्वधातुरूपायै भारत्यै नमः (कट्यादिपादाङ्गुल्यन्तं),
६ क्षं दोषत्रयरूपायै विद्यात्मिकायै नमः (कट्यादिब्रह्मरन्ध्रान्तं),
(इत्येकपञ्चाशच्छक्तिमातृकास्थानेषु विन्यस्य, ततः) ओं ऐं ह्रीं श्रीं ह्सौः स्हौः(अकारादिक्षकारान्तां मातृकामुच्चार्य) सकलप्रपञ्चाधिदेवतायै श्रीपराम्बादेव्यै नमः।
ह्सौः स्हौः श्रीं ह्रीं ऐं ओं (इति सर्वाङ्गे व्यापकं कुर्यात् )।

## २-भुवनन्यासः

(पादयोः) ओं ऐं ह्रीं श्रीं ह्सौः स्हौः अं आं इं अतललोकनिलयशतकोटिगुह्याद्ययोगिनीमूल देवतायुताधारशक्त्यम्बादेव्यै नमः।
(गुल्फयोः) ६ ईं उं ऊं वितललोकनिलयशतकोटिगुह्यतरानन्त योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।
(जङ्घयोः) ६ ऋं ॠं लृं सुतललोकनिलयशतकोट्यतिगुह्याचिन्त्य योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(जान्वोः) ६ लॄं एं ऐं महातललोकनिलयशतकोटिमहागुह्यस्वतन्त्र
योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(ऊर्वोः) ६ ओं औं तलातललोकनिलयशतकोटिपरमगुह्योच्छा
योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(स्फिचोः) ६ अं अः रसातललोकनिलयशतकोटिरहस्यज्ञान
योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(मूलाधारेः) ६ कं खं गं घं ङं पाताललोकनिलयशतकोटि
रहस्यतरक्रियायोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(स्वाधिष्ठाने) ६ चं छं जं झं ञं भूर्लोकनिलयशतकोट्यतिरहस्य
डाकिनीयोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(मणिपूरके) ६ टं ठं डं ढं णं भुवर्लोकनिलयशतकोटि महारहस्य
राकिणीयोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(अनाहते) ६ तं थं दं धं नं स्वर्लोकनिलयशतकोटिपरमरहस्य
लाकिनी क्रिया योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(विशुद्धौ) ६ पं फं बं भं मं महर्लोकनिलयशतकोटिगुप्तकाकिनी
योगिनीमूल देवतायुताधारशक्त्यम्बादेव्यै नमः।

(आज्ञायां) ६ यं रं लं वं जनलोकनिलयशतकोटिगुप्ततरसाकिनी
योगिनी मूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(ललाटे) ६ शं षं सं हं तपोलोकनिलयशतकोट्यतिगुप्तहाकिनी
योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः।

(ब्रह्मरन्ध्रे) ६ ळं क्षं सत्यलोकनिलयशतकोट्यतिगुप्तयाकिनी
योगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः(इति विन्यस्य)

६ (समस्तमातृकामुच्चार्य) सकलभुवनाधिपायै श्रीपराम्बादेव्यै
नमः ह्सौः स्हौः श्रीं ह्रीं ऐं ओं (इति व्यापकं कुर्यात् ।)

## ३– मूर्तिन्यासः

(शिरसि) ओं ऐं ह्रीं श्रीं ह्सौः स्हौः अं केशवायाक्षरशक्त्यै नमः,
(मुखे) ६ आं नारायणायाद्यशक्त्यै नमः,
(दक्षिणांसे) ६ इं माधवायेष्टदायै नमः,
(वामांसे) ६ ईं गोविन्दायेशान्यै नमः,
(दक्षपार्श्वे) ६ उं विष्णवे उग्रायै नमः,
(वामपार्श्वे) ६ ऊं मधुसूदनायोर्ध्वनयनायै नमः,
(दक्षकट्यां) ६ ऋं त्रिविक्रमाय ऋद्ध्यै नमः,
(वामकट्यां) ६ ॠं वामनाय रूपिण्यै नमः,
(दक्षोरौ) ६ लृं श्रीधराय लुप्तायै नमः,
(वामोरौ) ६ लॄं हृषीकेशाय लूनदोषायै नमः,
(दक्षजानुनि) ६ एं पद्मनाभायैकनायिकायै नमः,
(वामजानुनि) ६ ऐं दामोदरायैकारिण्यै नमः,
(दक्षजङ्घायां) ६ ओं वासुदेवायौघवत्यै नमः,
(वामजङ्घायां) ६ औं सङ्कर्षणायौर्वकामायै नमः,
(दक्षपादे) ६ अं प्रद्युम्नायाञ्जनप्रभायै नमः,
(वामपादे) ६ अः अनिरुद्धायास्थिमालाधरायै नमः,
(दक्षपादाग्रादूरुमूलपर्यन्तम् ) ६ कं भं भवाय करभद्रायै नमः,
(वामपादाग्रादूरुमूलपर्यन्तम् ) ६ खं बं शर्वाय खगबलायै नमः,
(दक्षपार्श्वे) ६ गं फं हराय गरिमफलप्रदायै नमः,
(वामपार्श्वे) ६ घं पं पशुपतये घोरपादायै नमः,
(दक्षदोर्मूले) ६ ङं नं उग्राय पंक्तिवासायै नमः,
(वामदोर्मूले) ६ चं धं महादेवाय चन्द्रार्धधारिण्यै नमः,
(कण्ठे) ६ छं दं भीमाय छन्दोमय्यै नमः,
(वदने) ६ जं थं ईशानाय जगत्स्थानायै नमः,
(दक्षकर्णे) ६ झं तं तत्पुरुषाय झङ्कृत्यै नमः,

(वामकर्णे) ६ ञं णं अघोराय ज्ञानदायै नमः,
(भाले) ६ टं ढं सद्योजाताय टङ्कढक्काधरायै नमः,
(शिरसि) ६ ठं डं वामदेवाय ठङ्कृतिडामर्यै नमः,
(मूलाधारे) ६ यं ब्रह्मणेयक्षिण्यै नमः,
(स्वाधिष्ठाने) ६ रं प्रजापतये रञ्जिन्यै नमः,
(मणिपूरके) ६ लं वेधसे लक्ष्म्यै नमः,
(अनाहते) ६ वं परमेष्ठिने वज्रिण्यै नमः,
(विशुद्धौ ) ६ शं पितामहाय शशिधरायै नमः,
(आज्ञायां) ६ षं विधात्रे षडाधारालयायै नमः,
(अर्धेन्दौ) ६ सं विरिञ्चये सर्वनायिकायै नमः,
(रोधिन्यां ) ६ हं स्रष्ट्रे हसिताननायै नमः,
(नादे ) ६ ळं चतुराननाय ललितायै नमः,
(नादान्ते ) ६ क्षं हिरण्यगर्भाय क्षमायै नमः,
ओं ऐं ह्रीं श्रीं ह्सौः स्हौः (सकलमातृकामुच्चार्य)
सकलत्रिमूर्त्यात्मिकायै श्रीपराम्बादेव्यै नमः ह्सौः स्हौं श्रीं ह्रीं ऐं ओं (इति व्यापकं कुर्यात् ।)

## ४- मन्त्रन्यासः

(मूलाधारे) ओं ऐं ह्रीं श्रीं हसौः स्हौः अं आं इं एकलक्षकोटिभेदप्रणवाद्येकाक्षरात्मकाखिलमन्त्राधिदेवतायै सकलफलप्रदायै एककूटेश्वर्यम्बादेव्यै नमः।

(स्वाधिष्ठाने) ६ ईं उं ऊं द्विलक्षकोटिभेदहंसादिद्व्यक्षरात्मकाखिल मन्त्राधिदेवतायै सकलफलप्रदायै द्विकूटेश्वर्यम्बादेव्यै नमः।

(मणिपूरके) ६ ऋं ॠं लृं त्रिलक्षकोटिभेदवह्न्यादित्रयक्षरात्मका-खिलमन्त्राधिदेवतायै सकलफलप्रदायै त्रिकूटेश्वर्यम्बादेव्यै नमः।

(अनाहते) ६ लृं एं ऐं चतुर्लक्षकोटिभेदचन्द्रादिचतुरक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै चतुष्कूटेश्वर्यम्बादेव्यै नमः।

(विशुद्धौ)६ ओंऔंअंअः पञ्चलक्षकोटिभेदसूर्यादिपञ्चाक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै पञ्चकूटेश्वर्यम्बादेव्यै नमः।

(आज्ञायां)६ कं खं गं षड्लक्षकोटिभेदस्कन्दादिषडक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै षट्कूटेश्वर्यम्बादेव्यै नमः।

(बिन्दौ)६ घं ङं चं सप्तलक्षकोटिभेदगणपत्यादिसप्ताक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै सप्तकूटेश्वर्यम्बादेव्यै नमः।

(अर्धेन्दौ)६ छं जं झं अष्टलक्षकोटिभेदबटुकाद्यष्टाक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै अष्टकूटेश्वर्यम्बादेव्यै नमः।

(रोधिन्यां)६ ञं टं ठं नवलक्षकोटिभेदगणपत्यादिनवाक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै नवकूटेश्वर्यम्बादेव्यै नमः।

(नादे)६ डं ढं णं दशलक्षकोटिभेदविष्ण्वादिदशाक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै दशकूटेश्वर्यम्बादेव्यै नमः।

(नादान्ते)६ तं थं दं एकादशलक्षकोटिभेदरुद्राद्येकादशाक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै एकादशकूटेश्वर्यम्बादेव्यैनमः।

(शक्तौ)६ धं नं पं द्वादशलक्षकोटिभेदवाण्यादिद्वादशाक्षरात्मका-
खिलमन्त्राधिदेवतायै सकलफलप्रदायै द्वादशकूटेश्वर्यम्बादेव्यै नमः।

(व्यापिकायां)६ फं बं भं त्रयोदशलक्षकोटिभेदवाण्यादि
त्रयोदशाक्षरात्मकाखिलमन्त्राधिदेवतायै सकलफलप्रदायै
त्रयोदशकूटेश्वर्यम्बादेव्यै नमः।

(समानायां)६ मं यं रं चतुर्दशलक्षकोटिभेदगौर्यादिचतुर्दशाक्षरात्मका-खिलमन्त्राधिदेवतायै सकलफलप्रदायै चतुर्दशकूटेश्वर्यम्बादेव्यै नमः।

(उन्मन्यां)६ लं वं शं पञ्चदशलक्षकोटिभेददुर्गादिपञ्चदशाक्षरात्मका-खिलमन्त्राधिदेवतायै सकलफलप्रदायै पञ्चदशकूटेश्वर्यम्बादेव्यै नमः।

(ध्रुवमण्डले)६ षं सं हं ळं क्षं षोडशलक्षकोटिभेद त्रिपुरादि षोडशा-क्षरात्मकाखिलमन्त्राधिदेवतायै सकलफलप्रदायै षोडशकूटेश्व-र्यम्बादेव्यै नमः।

ओं ऐं ह्रीं श्रीं ह्सौः स्हौः(सकलमातृकामुच्चार्य)सकलमन्त्राधि देवतायै श्रीपराम्बादेव्यै नमः ह्सौः स्हौः श्रीं ह्रीं ऐं ओं (इति व्यापकं कुर्यात् )।

## ५- देवतान्यासः

(दक्षपादे) ओं ऐं ह्रीं श्रीं ह्सौः स्हौः अं आं
सहस्रकोटिऋषिकुलसेवितायै निवृत्त्यम्बादेव्यै नमः।

(वामपादे) ६ इं ईं सहस्रकोटियोगिनीकुलसेवितायै
प्रतिष्ठाम्बादेव्यै नमः।

(दक्षगुल्फे) ६ उं ऊं सहस्रकोटितपस्विकुलसेवितायै
विद्याम्बादेव्यै नमः।

(वामगुल्फे) ६ ऋं ॠं सहस्रकोटिशान्तकुलसेवितायै
शान्ताम्बादेव्यै नमः।

(दक्षजङ्घायां ) ६ ऌं ॡं सहस्रकोटिमुनिकुलसेवितायै
शान्त्यतीताम्बादेव्यै नमः।

(वामजङ्घायां) ६ एं ऐं सहस्रकोटिदैवतकुलसेवितायै
हृल्लेखाम्बादेव्यै नमः।

(दक्षजानुनि) ६ ओं औं सहस्रकोटिराक्षसकुलसेवितायै
गगनाम्बादेव्यै नमः।

(वामजानुनि) ६ अं अः सहस्रकोटिविद्याधरकुलसेवितायै
रक्ताम्बादेव्यै नमः।

(दक्षोरौ ) ६ कं खं सहस्रकोटिसिद्धकुलसेवितायै
महोच्छुष्माम्बादेव्यै नमः।

(वामोरौ ) ६ गं घं सहस्रकोटिसाध्यकुलसेवितायै
करालिकाम्बादेव्यै नमः।

(दक्षोरुमूले) ६ ङं चं सहस्रकोट्यप्सरःकुलसेवितायै
जयाम्बादेव्यै नमः।

(वामोरुमूले) ६ छं जं सहस्रकोटिगन्धर्वकुलसेवितायै
विजयाम्बादेव्यै नमः।

(दक्षपार्श्वे) ६ झं ञं सहस्रकोटिगुह्यककुलसेवितायै
अजिताम्बादेव्यै नमः।

(वामपार्श्वे) ६ टं ठं सहस्रकोटियक्षकुलसेवितायै
अपराजिताम्बादेव्यै नमः।

(दक्षस्तने) ६ डं ढं सहस्रकोटिकिन्नर कुलसेवितायै
वामम्बादेव्यै नमः।

(वामस्तने) ६ णं तं सहस्रकोटिपन्नगकुलसेवितायै
ज्येष्ठाम्बादेव्यै नमः।

(दक्षदोर्मूले)६ थं दं सहस्रकोटिपितृकुलसेवितायै
रौद्र्यम्बादेव्यै नमः।

(वामदोर्मूले)६ धं नं सहस्रकोटिगणेश्वरकुलसेवितायै
मायाम्बादेव्यै नमः।

(दक्षभुजे)६ पं फं सहस्रकोटिभैरवकुलसेवितायै
कुण्डलिन्यम्बादेव्यै नमः।

(वामभुजे)६ बं भं सहस्रकोटिवटुककुलसेवितायै
काल्यम्बादेव्यै नमः।

(दक्षांसे)६ मं यं सहस्रकोटिक्षेत्रेशकुलसेवितायै
कालरात्र्यम्बादेव्यै नमः।

(वामांसे)६ रं लं सहस्रकोटिप्रमथकुलसेवितायै
भगवत्यम्बादेव्यै नमः।

(दक्षकर्णे)६ वं शं सहस्रकोटिब्रह्मकुलसेवितायै
सर्वेश्वर्यम्बादेव्यै नमः।

(वामकर्णे)६ षं सं सहस्रकोटिविष्णुकुलसेवितायै
सर्वज्ञात्र्यम्बादेव्यै नमः।

(भाले)६ हं ळं सहस्रकोटिरुद्रकुलसेवितायै
सर्वकर्त्र्यम्बादेव्यै नमः।

(ब्रह्मरन्ध्रे)६ क्षं सहस्रकोटिचराचरकुलसेवितायै
- कुलशक्त्यम्बादेव्यै नमः।

ओं ऐं ह्रीं श्रीं ह्सौः स्हौः(सकलमातृकामुच्चार्य)
समस्तदेवताधिपायै श्रीपराम्बादेव्यै नमः ह्सौः स्हौः श्रीं ह्रीं ऐं ओं
(इति व्यापकं कुर्यात् ।)

## ६- मातृकाभैरवन्यासः

(मूलाधारे) ओं ऐं ह्रीं श्रीं ह्सौः स्हौः कं खं गं घं ङं
अनन्तकोटिभूचरीकुलसहितायै आं क्षां मङ्गलाम्बादेव्यै आं क्षां
ब्रह्माण्यम्बादेव्यै अनन्तकोटिभूचरकुलसहिताय अं क्षं मङ्गलनाथाय
अं क्षं असिताङ्गभैरवनाथाय नमः।

(स्वाधिष्ठाने) ६ चं छं जं झं ञं अनन्तकोटिखेचरीकुलसहितायै
ईं ळां चर्चिकाम्बादेव्यै ईं ळां माहेश्वर्यम्बादेव्यै
अनन्तकोटिवेतालकुलसहिताय इं ळं चर्चिकनाथाय
इं ळं असिताङ्गभैरवनाथाय नमः।

(मणिपूरके) ६टं ठं डं ढं णं अनन्तकोटिपातालचरीकुलसहितायै
ऊं हां योगेश्वर्यम्बादेव्यै ऊं हां कौमार्यम्बादेव्यै
अनन्तकोटिपिशाचकुलसहिताय उं हं योगेश्वरनाथाय उं हं
चण्डभैरवनाथाय नमः।

(अनाहते) ६ तं थं दं धं नं अनन्तकोटिदिक्चरीकुलसहितायै ॠं
सां हरसिद्धाम्बादेव्यै ॠं सां वैष्णव्यम्बादेव्यै
अनन्तकोट्यपस्मारकुलसहिताय ऋं सं हरसिद्धनाथाय ऋं सं
क्रोधभैरवनाथाय नमः।

(विशुद्धौ) ६ पं फं बं भं मं अनन्तकोटिसहचरीकुलसहितायै
ॡं षां भट्टिन्यम्बादेव्यै ॡं षां वाराह्यम्बादेव्यै
अनन्तकोटिब्रह्मराक्षसकुलसहिताय ऌं षं भट्टिनाथाय
ऌं षं उन्मत्तभैरवनाथाय नमः।

(आज्ञायां) ६ यं रं लं वं अनन्तकोटिगिरिचरीकुलसहितायै ऐं शां
किलिकिलाम्बादेव्यै ऐं शां इन्द्राण्यम्बादेव्यै
अनन्तकोटिचेटककुलसहिताय एं शं किलिकिलिनाथाय एं शं
कपालिभैरवनाथाय नमः।

(भाले) ६ शं षं सं हं अनन्तकोटिवनचरीकुलसहितायै औं वां
कालरात्र्यम्बादेव्यै औं वां चामुण्डाम्बादेव्यै
अनन्तकोटिप्रेतकुलसहिताय ओं वं कालरात्रिनाथाय ओं वं
भीषणभैरवनाथाय नमः।

(ब्रह्मरन्ध्रे) ६ ळं क्षं अनन्तकोटिजलचरीकुलसहितायै अः ळां भीषणाम्बादेव्यै अः ळां महालक्ष्म्यम्बादेव्यै अनन्तकोटिकूष्माण्डकुलसहिताय अं ळं भीषणनाथाय अं ळं संहारभैरवनाथाय नमः।

ओं ऐं ह्रीं श्रीं ह्सौः स्हौः (समस्तमातृकामुच्चार्य) समस्तमातृकाभैरवाधिदेवतायै श्रीपराम्बादेव्यै नमः ह्सौः स्हौः श्रीं ह्रीं ऐं ओं (इति व्यापकं कुर्यात् ।)

(अनन्तरं पूर्वोक्तैः ह्सां ह्सीं इत्यादिभिः करषडङ्गन्यासं विधाय देवं ध्यायेत् )। यथा–

अमृतार्णवमध्योद्यत्स्वर्णद्वीपे मनोरमे।
कल्पवृक्षवनान्तःस्थे नवमाणिक्यमण्डपे।।

नवरत्नमयश्रीमत् – सिंहासनगताम्बुजे।
त्रिकोणान्तस्समासीनं चन्द्रसूर्यायुतप्रभम् ।।

अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ।
कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम् ।।

मन्दस्तिमुखाम्भोजं त्रिनेत्रं चन्द्रशेखरम् ।
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम् ।।

पानपात्रञ्च चिन्मुद्रां त्रिशूलं पुस्तकं करैः।
विद्यासंसदि बिभ्राणं सदानन्दमुखेक्षणम् ।।

महाषोढोदिताशेष–देवतागणसेवितम् ।
एवं चित्ताम्बुजे ध्यायेदर्धनारीश्वरं शिवम् ।।

पुरुषं वा स्मरेद् देवि स्त्रीरूपं वा विचिन्तयेत् ।
अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ।।

सर्वतेजोमयं ध्यायेत् सचराचरविग्रहम् ।

(इति स्वाभेदेन ध्यात्वा, योनि–लिङ्ग –सुरभि–कपाल–ज्ञान त्रिशूल–पुस्तक–वनमाला – नभो – महामुद्रा इति दशमुद्राः प्रदर्श्य शिरसि श्रीगुरुं ध्यायेत् )।

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम्।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम् ।।

(इति श्रीगुरुं ध्यात्वा तद्विद्यया तत्पादुकां शिरसि विन्यस्य, प्रणम्य स्वगुरुकृतं **स्वनाम** स्वमूलाधारे स्मृत्वा शिवरूपं च स्वात्मानं ध्यायेत्)।

इति महाषोढान्यासः

(महाषोढान्यासफलं कुलार्णवे)
एवं न्यासे कृते देवि साक्षात्परशिवो भवेत् ।
मन्त्री चात्र न सन्देहो निग्रहानुग्रहक्षमः।।

महाषोढाह्वयं न्यासं यः करोति दिने दिने।
देवास्सर्वे नमस्यन्ति तं नमामि न संशयः।।

महाषोढाह्वयं न्यासं यत्र मन्त्री न्यसेत्ततः।
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद् दशयोजनम् ।।

कृत्वा न्यासमिमं देवि यत्र गच्छति मानव :।
तत्र श्रीर्विजयो लाभः स मान्यः पुरुषः प्रिये।।

महाषोढाकृतन्यासस्त्वदीक्षायाभिवन्दते।
स मासान्मृत्युमाप्नोति यदि त्राता शिवः स्वयम् ।।

वज्रपञ्जरनामानमेवं न्यासं करोति यः।
दिव्यान्तरिक्षभूशैलदलारण्यनिवासिनः।।

उद्दण्डभूत–वेताल–देव–रक्षो–ग्रहादयः।
भयग्रस्तेन मनसा नेक्षन्ते साधकं प्रिये।।

महाषोढाह्वयं न्यासं ब्रह्मविष्णुशिवादयः।
देवास्सर्वे प्रकुर्वन्ति ऋषयश्च मुनीश्वराः।।

बहुनोक्तेन किं देवि! सुशिष्याय प्रकाशयेत् ।
अक्षयां लभते सिद्धिं रहसि न्यासमाचरेत् ।।

अस्मात् परतरः साक्षाद्देवताभावसिद्धिदः।
लोके नास्ति न सन्देहः सत्यं सत्यं न संशयः।।

ऊर्ध्वाम्नाय प्रवेशश्च परा प्रासाद चिन्तनम् ।
महाषोढापरिज्ञानं नाल्पस्य तपसः फलम् ।।

## ५. त्रैपुर–सिद्धान्तः

*Tripura Siddhanta is a summary of tenets of srividya philosophy. This is imparted by the Guru during the Diksha ceremony.*

भूतानि, तन्मात्राणि, ज्ञानकर्मेन्द्रियाणि, अहङ्कारबुद्धिमनांसि, गुणसाम्यरूपा प्रकृतिः, शरीरकञ्चुकितशिवो जीवः, परमशिवगताः स्वतन्त्रता–नित्यता–नित्यतृप्तता–सर्वकर्तृकता–सर्वज्ञता धर्मा एव संकुचितास्सन्तो जीवे नियति–काल–राग–कलाविद्याशब्दवाच्या भवन्ति। माया (जगत्परमशिवयोर्भेदबुद्धिः) शुद्धविद्या (तयोरभेदबुद्धिः) जगदिदन्तया पश्यन् परमशिव ईश्वरः, तदहन्तया पश्यन् सदाशिवः, शक्ति परमशिवस्य जगत्सिसृक्षा, तद्वान् शिवः, षट्त्रिंशत्तत्त्वानि, स्वविमर्शः पुरुषार्थं, वर्णसमुदायरूपाः मन्त्रा नित्याः, (मूलविद्यासमसत्ताका व्यावहारिकनित्याः) मन्त्राणा – मचिन्त्यशक्तित्वेन स्वगुरुपरम्परोपदेशैरगम्यधर्मरूपेण सम्प्रदायेन गुरुशास्त्रदेवतासु विश्वासेन सर्वास्सिद्धयः, आचार्योक्तरीत्या गुरुमन्त्रदेवतात्मनामैक्यं विभावयन् मनःपवनयोरेकयन्त्रनिरोद्धव्यत्व–

ज्ञानाच्च प्रत्यगात्मवेदनम् , भावनादार्ढ्यान्निग्रहानुग्रहसिद्धिः। दर्शनान्तरानिन्दनेन स्वोपास्यनिष्ठया मन्त्रार्थानुसन्धानेन कामक्रोध निन्दापरिवर्जनेन च सिद्धयो भवन्ति।

वृत्तिभिर्वेद्यं सर्वं हविः, इन्द्रियाणि स्रुचः, संकोचेन स्वात्मस्थिता स्सर्वज्ञत्वसर्वकर्तृत्वादयःपरमशिवशक्तय एव ज्वालाः, स्वात्मशिव एव पावकः, स्वयमेव होता, निर्गुणब्रह्मापरोक्ष्यं फलम्, स्वपारमार्थिक स्वरूपलाभान्न परमिति सारः।

## ६.जपविधिः

*This is an elaborate procedure for performing the Pachadashi or Shodashi mantra. This procedure is prescribed for the 'siddhi' of the mantra. A total of 9 lakh times of such a Japa count will make the sadhaka realise the full potency of the Srividya mantra.*

अस्य श्रीमहात्रिपुरसुन्दरीपञ्चदशाक्षरीमहामन्त्रस्य (ऐं ह्रीं श्रीं ३) आनन्दभैरवाय ऋषये नमः (शिरसि), ३ पङ्क्त्यै छन्दसे नमः(मुखे), ३ श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः (हृदि)३ ऐं बीजाय नमः(गुह्ये) ३ सौः शक्तये नमः(पादयोः)। क्लीं कीलकाय नमः(नाभौ), ३श्रीललितामहात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगः

(करसम्पुटे)

ऐं ह्रीं श्रीं (मूलविद्यया, सर्वाङ्गे त्रिर्व्यापकम् ।)
३ क ए ई ल ह्रीं अङ्गुष्ठाभ्यां नमः।
३ ह स क ह ल ह्रीं तर्जनीभ्यां स्वाहा।
३ स क ल ह्रीं मध्यमाभ्यां वषट् ।
३ क ए ई ल ह्रीं अनामिकाभ्यां हुं।
३ ह स क ह ल ह्रीं कनिष्ठिकाभ्यां वौषट् ।
३ स क ल ह्रीं करतलकरपृष्ठाभ्यां फट् ।
एवं हृदयादिन्यासः। यथा–

ऐं ह्लीं श्रीं क ए ई ल ह्लीं हृदयाय नमः।
३ ह स क ह ल ह्लीं शिरसे स्वाहा।
३ स क ल ह्लीं शिखायै वषट्।
३ क ए ई ल ह्लीं कवचाय हुम्।
३ ह स क ह ल ह्लीं नेत्रत्रयाय वौषट्।
३ स क ल ह्लीं अस्त्राय फट्। भूर्भुवस्सुवरोम्

(इति दिग्बन्धः)

(अथ ध्यानम्। तच्च पूर्वोक्तमेव।)
(षोडश्युपासकानान्तु षोडशीमन्त्रस्य ऋषिछन्ददेवताः षडङ्गन्यासाः।)

*Those who are initiated into shodashi, should perform anganyasa & karanyasa along with Rishi, Chandas, Devata of Shodashi Mantra.*

(श्रीषोडशाक्षर्यस्तु–दक्षिणामूर्तिः ऋषिः। तत्र करषडङ्गन्यासयोः तत्कूटषट्कमिति विशेषः।)



*Using Shaktyutthapana Mudra contemplate the kundalini to rise up-, exiting and entering the body again. Contemplate on the Kamakala bija (eem) transforming itself as oneself; and visualise the unity of Guru - Mother -Mantra and oneself, as instructed by Guru.*

(ततःशक्त्युत्थापनमुद्रया स्वदेहे शून्यतां विभाव्य बिन्दुत्रयसपरार्धरूपां कामकलां विचिन्त्य तस्याः स्वात्मतया परिणामं श्रीगुरुमुखावगतं विभाव्य श्रीगुरुदेवतामन्त्रात्मनामैक्यं भावयेत् )

*Chant 'Hreem' and place middle and ring finger of right hand on one's head. (Shiromudra). Chant Kulukka mantra. Now place the right hand fingers on heart and chant 'OM' join ringfinger and thumb of right hand and place it on neck and chant 'Om Hreem' (nyasa-mudra)*

अथ 'ह्रीं'(मूर्ध्नि शिरोमुद्रां न्यस्य) ३ ऐं क्लीं ह्रीं त्रिपुरे भगवति स्वाहा(इति द्वादशाक्षरीं कुल्लुकाविद्या), ततो (हृदयमुद्रया हृदि हस्तं दत्त्वा), ३ ओं (इत्येकाक्षरं सेतुम् ), (अथ कण्ठे न्यासमुद्रया) ३ ह्रीं इत्येकाक्षरं महासेतुम् ), (तदनु नाभौ पूर्वमुद्रयैव)

*Place nyasamudra on navel and chant 'Om.am, aam,.....ksham., aim, mulamantra, aim am, aam,.....ksham Om') Thrice*

३ ओं अं.....क्षं(५१) ऐं (मूलं) ऐं...अं....क्षं (५१) ओं (इति एकविंशधिकैकशताक्षरं निर्वाणमन्त्रं च त्रिस्त्रिजपेत् ।)

*Chant kameshvari mantra thrice while contemplating on Svadhishthana*

ऐं ह्रीं क्लीं (इति कामेश्वरीमन्त्रं स्वाधिष्ठाने त्रिर्जपेत् )।

*Contemplate on Kamakalamantra ('eem') thrice in Muladhara*

३ ईं (इति कामकलामन्त्रं मूलाधारे त्रिर्जपेत् )।

*Now staying focussed on Mother, Chant the Samashthi mantra.*

३ समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलोत्तीर्णनिगर्भरहस्याति रहस्यपरापरातिरहस्ययोगिनीभ्यो नमः (इति समष्टिमन्त्रं जपेत् )।

*Chant Utkilana mantra seven times.*

३ ई ए क ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं
(इति पञ्चदशाक्षरमुत्कीलनं सप्तवारं जपेत् )।

*Contemplate on Sanjivani Devi perform Panchopachara Puja mentally(lam....) chant Sanjivani mantra seven times.*

३ विद्युदक्षीं परां विद्यां, कालिकां देशभाषिणीम्
खड्गमुण्डविकाराख्यां व्याघ्रचर्मविभूषिताम् ।
रक्तमाल्याम्बरधरां, घोररूपां चतुर्भुजाम्
खड्गं शूलं कपालं च दधतीं तीक्ष्णनासिकाम् ।
सिद्ध्यर्थं चिन्तयेद्देवीं सर्वविद्यासुजीविनाम् ।। इति सञ्जीविनीं (ध्यात्वा पञ्चधोपचर्य), ३ श्रीं क्लीं क्लीं हैं हैं क ल ह्रीं सौः स

क ल ह्रीं क्लीं क्लीं ह्रीं श्रीं
(इति सप्तदशाक्षरं सञ्जीविनीमन्त्रं सप्तवारं जपेत् )।

ऐं ह्रीं श्रीं ह्रीं श्रीं हं सः क ए ई ल ह्रीं, ह स क ह ल ह्रीं स क ल ह्रीं हं सः ह्रीं श्रीं (इति त्रयोविंशत्यक्षरं प्राणमन्त्रं सप्तवारं जपेत् )।

*Chant the Prana mantra seven times.*

३ ओं श्रीं ऐं क्लीं ह्रीं क ए ई ल ह्रीं ओं ह्रीं श्रीं क्लीं ऐं ह स क ह ल ह्रीं, ओं ऐं श्रीं क्लीं ह्रीं ह क ल ए ह्रीं ह क ह ल ह्रीं ह ए क ल ह्रीं, ओं ऐं क्लीं श्रीं ह्रीं क ह ल ए ह्रीं क ह ए ल ह्रीं क ह ह ल ह्रीं हं सः, ओं ह्रीं श्रीं हूं स क ल ह्रीं हंसः
(इति चतुः सप्तत्यक्षरं दीपिनीमन्त्रं च सप्तवारं जपेत् )

*Chant the Dipini mantra seven times*

(इमे मन्त्राः पञ्चदशीषोडशीनां साधारणाः)।

*(For those intitiated in Shodashashi)*

(षोडशाक्षर्या असाधारणाः पञ्चमन्त्राः)। यथा–

ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं ह्रीं श्रीं ह स क्ष म ल व र यूं, स ह क्ष म ल व र यीं, य र ल व क्ष म ल व र यूं ओं ह्री श्रीं ओं सौः क्लीं ऐं
(इति महाकामेश्वरमन्त्रं दशवारं जपेत् )।

ऐं क्लीं सौः ओं श्रीं ह्रीं हसक्षमलयउं सहक्षमलवरयऊं यरलवक्षमयऊं ओं ह्रीं श्रीं ओं सौः क्लीं ऐं

*Chant Mahakameshvara mantra ten times*

३ (पञ्चदशी) क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं
(त्रिवारं जपेत् ।।१।।)

*Chant Panchadashi mantra thrice*

३ (षोडशी) श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह

ल ह्रीं स क ल ह्रीं सौः ऐं क्लीं ह्रीं श्रीं (त्रिवारं जपेत्।।२।।:)

*Chant Shodashi mantra thrice*

३ ऐं क्लीं सौः बालायै नमः (त्रिवारं जपेत्।।२।।:)

*Chant Bala mantra thrice*

३ ऐं क्लीं उच्छिष्टचण्डालि सुमुखि देवि महापिशाचिनि ह्रीं ठः ठः ठः स्वाहा (त्रिवारं जपेत् ।।४।।)

*Chant Uchchishthachandali mantra thrice*

३ ओं ह्रीं स्त्रीं हूं क्रीं श्रीं उग्रतारे सौः क्लीं ह्रीं श्रीं स्वाहा। (त्रिवारं जपेत् ।।५।।)

*Chant Tara mantra thrice*

(एते पञ्च मन्त्राः पञ्चरत्नपदेनोच्यन्ते।)

*Now follow the procedure for Japa for both Panchadashi and Shodashi.*

(ततः सूतकनिवारणाय प्रणवसम्पुटितां मूलविद्यां(पञ्चदशी)

*Chant Om. mulamantra Om.* *(Ten times)*

दशवारमावर्त्यानन्तरं विघ्नहरान् षण्मन्त्रान् त्रिस्त्रिर्जपेत् । (यथा–)

*Now chant these Vighnahara mantra thrice each*

ऐं ह्रीं श्रीं इ रि मि लि कि रि कि लि प रि मि रोम् ।

३ ओं ह्रीं नमो भगवति महात्रिपुरभैरवि मम त्रैपुररक्षां कुरु कुरु।

३ संहर संहर विघ्नरक्षोविभीषकान् कालय हुं फट् स्वाहा।

३ ब्लूं रक्ताभ्यो योगिनीभ्यो नमः।

३ सां सारसाय बह्वाशनाय नमः।

३ दु मु लु षु मु लु षु ह्रीं चामुण्डायै नमः।

(एते कुल्लुकाद्या विघ्नहरान्ता जपस्य पूर्वाङ्गमन्त्राः। त्रितारीपूर्वकत्वं तु सर्वेषां सिद्धमेव)।

ऐं क्लीं ह्रीं श्रीं भगवति त्रिपुरसुन्दरि स्वाहा, (कुलुकां शिरसि,)
*With right hand in nyasa mudra touch the head and chant Kuluka once*

ओं (सेतुं हृदि), *With right hand in nyasa mudra touch the heart and chant Setu once* द्रीं (महासेतुं कण्ठे), *With right hand in nyasa mudra touch the throat and chant Mahasetu once* ह्रीं (महासेतुं सहस्रारे), *With right hand in nyasa mudra touch the navel and chant Nirvana once* ओं श्रीं अं ऐं क्लीं सौः अं आं इं ईं उं ऊं ....क्षं (इति निर्वाणं-नाभौ) क्लीं (कामबीजं लिङ्गे), *With right hand in nyasa mudra touch the generative organ and chant Kamabija once* जिह्वायां मूलविद्यां च विचिन्त्य जपेत् । *With right hand in nyasa mudra touch the mouth and chant Mulamantra once*

ततः पेशीच्छन्नां सुवर्ण-रत्न-स्फटिक-मणि-पुत्रजीव-रुद्राक्षाद्यन्यतम-निर्मितां मालां संस्कारविधिना संस्कृतामादाय, क्वचित्पात्रे वामपाणौ वा निधाय, सामान्यार्घ्योदकेन शुद्धोदकेन वा मूलेनाभ्युक्ष्य,)

*Now take the rosary to be used for Japa from its closed container/ Pouch*

*The Japa mala should be properly consecrated (samskara) before chanting*

*Place the mala on left hand or a plate and sprinkle a little water while chanting Mula mantra.*

*Pray to the Japamala while chanting the following mantra...*

ओं मां माले महामाये सर्वशक्तिस्वरूपिणि।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव।।

(इति प्रार्थ्य,) ह्रीं सिद्ध्यै नमः (इति मन्त्रेण पुनः पुनः आवृत्तेन गन्धादिभिः पञ्चभिः गन्धपुष्पाभ्यामेव वा सम्पूज्य।)
*Apply a little sandal to the mala.*

